॥ श्रीः ॥

# तर्कसंग्रहः

(मूल, शाब्दबोध, दलकृत्य–समेतम्)

卐

प्रकाशकाः

**माधवाचार्य वडवि**

कामनकट्टि, धारवाड–१.

॥ श्रीः ॥

# तर्कसंग्रहः

(मूल, शाब्दबोध, दलकृत्य-समेतम्)



वेदान्तसाम्राज्यचक्रवर्तिनः जगद्गुरु श्रीमदुत्तरादिमठाधीशाः

**श्री श्री १००८ श्री सत्यप्रमोदतीर्थश्रीमच्चरणाः**




॥ श्रीः ॥

# अनुग्रहपत्रम्

卐

पूर्णप्रज्ञ प्रणीत प्रमाण प्रमेय प्रगल्भ प्रकरण ग्रन्थ प्रवेशनात् प्राक् प्रकृतिप्रत्यययोजनाप्रकारः अवश्यं वेदितव्य इति विदितं सर्वेषां विमृशतां विद्वद्वराणाम्। तदर्थं तर्कसंग्रहाख्यनव्यन्याशास्त्रग्रन्थविवरणरूप निबन्धोऽयं न्याय-शिरोमणिपदवीधरैर्न्यायवेदान्तनिष्णातैश्च वडवीत्युपाव्है र्माधवाचार्यैः निर्मित इति नः प्रमोदः।

विशेषतः कर्कशेऽपि तर्कशास्त्रेऽभिनिविविषुः उपयुक्तो ग्रन्थोऽयम्।

प्रकृतिप्रत्यययोजनारूपः शाब्दबोधप्रकारः सदलकृत्यः निष्कृष्टलक्षणलक्षितश्च सुलभतमशैल्या छात्रानुकूलया रीत्या सम्प्रदर्शितः।

निबन्धेनानेन वैष्णवाः केवलं शुष्कवेदांतिन इति अज्ञजनकृतः आक्षेपोऽपाकृतः।

विद्वत्पक्षपातिनो विपश्चितो विद्यार्थिनश्च प्रबंधेनानेन बहूपकारं विदंतीति विश्वसिमः।

ग्रन्थकर्त्रे आयुरारोग्यादिकं प्रदाय इतोप्यतिशय शास्त्रीयप्रबंधरचनाचातुर्यं ग्रंथप्रकाशनसामर्थ्यं च दद्यादिति अस्मदुपास्यं ससीतं रामचंद्रमुपास्महे।

**–श्री श्रीमदार्य अक्षोभ्यतीर्थ मठाधीशाः**
**श्री रघुप्रमतितीर्थाः**




# प्रास्ताविकम्

卐

" श्रृणुतामलसत्यवचः परमं शपथेरितमुछ्रितबाहुयुगम् ।
न हरेः परमो न हरेः सदृशः परमः स तु सर्वचिदात्मगणात् ।।"

इति श्रीमदाचार्यैर्निःशंकमुद्घोषितं सम्यक्प्रतिपादितं च । अतः भूत–भविष्यद्वर्तमाननरैरखण्डच वेदांतग्रंथरत्न तत्सहकारि टीकाटिप्पणी ग्रन्थैरेवालम् । किमनेन तर्कसंग्रहटीकाख्यन्यायग्रन्थप्रकाशनेन ? इति वैय्यर्थ्यशंका वाचकहृदये उदेतुं शक्या । तथापि अत्युन्नत पूर्णबोध तीर्थ सौधमारोढुं न्याय-व्याकरणादि शास्त्ररूपसोपाना अपि अत्यव श्यका इति विदितं विश्वैर्विद्वद्भिः ।

यद्वा शुष्क तर्कजालैस्तत्ववादैकनिष्ठ सज्जनानपि पराजेतुमा गतनां पाषण्डिनां मुखमवाङमुखीकर्तुं न्यायग्रन्थादीनध्येतुमावश्यकमेवेत्य स्माकं मतिः । अत एव श्रीमदाचार्यैरेव अग्रेतनपद्ये–

" यदि नाम परो न भवेत्सहरिः कथमस्य वशे जगदेतदभूत् ।
यदि नाम न तस्य वशे सकलं कथमेव तु नित्यसुखं न भवेत् ।।

हरिर्यदि सर्वोत्तमो न भवेत्, तर्हि एतज्जगत्तस्य वशे न स्यात् (स्वतंत्र चेत्), तर्हि नित्यसुखं कथं न भवेत् इत्याद्यागमसहकृत तर्कैरपि लीलया प्रतिपादितमस्ति ।

अत एवसिद्धान्तोक्त तर्क (प्रमाण) स्वरूपज्ञानात्पूर्वं तर्कसंग्रह ज्ञानमपि महत्वपूर्णमिति एतत्प्रबन्धप्रकटनेन न कश्चिद्दोषावसरोऽस्तीति मन्यामहे ।

सतीष्वपि अनेकासु तर्कसंग्रहव्याख्यासु काश्चिन्न मन्दोपकारिण्यः काश्चिद्भावार्थैकपराः काश्चित्संक्षेपेणोक्ताः । अत्र तु मङ्गलाचरण मारभ्य समाप्तिपर्यंतं सकललक्षणवाक्यानां शाब्दबोधप्रकारं सम्यक्प्रदर्श्य

पठितृणां पाठयितृणामपि झटिति बोधाय यत्नीकृतमस्ति । तथैव तत्र तत्र विशेषतः प्रत्यक्षपरिच्छेदलक्षणसंगतिः दलकृत्यं अव्याप्त्यादि शंका तत्परिहार रूप परिष्कारश्चेत्यादि विद्यार्थिजनहिताय सम्यक्प्रदर्शितम् । एतदध्ययनेन न्यायशास्त्रं पिपठिषवः विशेषतो व्युत्पत्तिलाभं प्राप्नुयुः । किं बहुना सर्वेषामेव तर्कशास्त्रप्रेमिणामत्यन्त तुष्टि विषयमिति न तद्विषये विशेषो वक्तव्योऽवशिष्यते ।

अस्मिन्नवसरे अस्मद् गुरूणां परमपूज्य श्रीमत्सत्यध्यानतीर्थ गुरुराज करसरोज सञ्जात श्रीमत्सत्यप्रज्ञतीर्थ गुरुपादपद्मयुगलं च तत्करकमल सञ्जात श्रीमसत्याभिज्ञतीर्थ गुरुपादपद्मयुगलं तथैव अद्य तत्पीठे राराज मानानां श्रीमत्सत्यप्रमोदतीर्थ श्रीमच्चरणानां पादपद्मद्वयं च दण्ड वत्प्रणति पुरःसरं स्मरामः । तथैव एतत्प्रबन्धं प्रकटीकर्तुमनुग्रहपत्र प्रदानेन महोपकारं कृतवतां पूर्वाश्रमे अस्मत्सहाध्यायिनां श्रीमदार्य अक्षोभ्यतीर्थ मठपरंपरा प्राप्त श्री रघुप्रमतितीर्थानां चरणसन्निधौ अनन्तान्तनतितति समर्पयामः ।

एवं न्यायवेदांत पाठमामूलाग्रं अध्यापयितृणां दि. पूज्य श्री पांडुरंगी कृष्णाचार्य महाशयानां, दि. पूज्य श्री मळगी वेदव्यासाचार्य महाभागानां, वेदान्त शिरोमणि दि. पूज्य श्री गुत्तल रंगाचार्य महो दयानां, दि. पूज्य श्री तोरवी कृष्णमूर्त्याचार्य शर्मणाँ अन्तेवासिना वडवी माधवेन विरचितः तर्कसंग्रहशाब्दबोधः ।

ग्रन्थ परिशोधने कृतसहाय्यानां श्रीमतां पण्डित पांडुरंगी गुरा चार्य शर्मणां, पण्डित जालिहाळ केशवाचार्य शर्मणां, पण्डित कंची वादिराज शर्मणां महोपकारं कृतज्ञताभावेन सानन्दमभिनन्दयामः ।

प्रथमप्रवृत्ततया मुद्रणे दृष्टानां दोषणामपहृतये शुद्धाशुद्ध पत्रि - काऽपि संमुद्रिता । तथापि मुद्रणवैकल्यात् मानुषसहजानवधानाद्वा समापतितान् दोषान् सहृदयाः सदयं क्षाम्यन्तु ।

किञ्च एतत्प्रकटनप्रोत्साहनेन कृतसहकाराणां श्री गलगली हनुमन्ताचार्य शर्मणां च श्री वी. आर्. मरळीहळ्ळी शर्मणां एवमन्येषा

मुपकारं कृतवतां आयुरारोग्यैश्वर्यादिकान् प्रदद्यादिति मध्ववल्लभमभ्य र्थयामः ।

एवं मुद्रणकार्यं सम्यक् निर्वाह्य परमादरेण मुद्रापयितृभ्यः श्री केशवाचार्य शिरहट्टि (**शिरहट्टि प्रिंटर्स, गदग.**) एतेभ्यो अनेके: धन्यवादाः ।

हंसक्षीर न्यायेन विद्वांसो विद्यार्थिनश्च एतत्प्रबन्धं स्वीकृत्य अस्मत्परिश्रमं सफलीकुर्युरिति विश्वस्य विरमामः ।

कामनकट्टि

**धारवाड-१.**

चैत्र शुक्ल प्रतिपदि

रुधिरोद्गारि नाम संवत्सरे

विद्वद्विधेयः

**श्री वडवीत्युपाह्व माधवः**

# विषयानुक्रमणिका


| | |
|---|---|
| अथ मंगलाचरणम् | १ |
| **१. प्रत्यक्षपरिच्छेदः** | |
| अथ पदार्थनिरूपणम् | ४ |
| अथ द्रव्यनिरूपणम् | ४ |
| अथ गुणनिरूपणम् | ५ |
| अथ कर्मनिरूपणम् | ६ |
| अथ सामान्यनिरूपणम् | ७ |
| अथ विशेषनिरूपणम् | ७ |
| अथ समवायनिरूपणम् | ८ |
| अथ अभावनिरूपणम् | ९ |
| अथ पृथिवीनिरूपणम् | १० |
| अथ जलनिरूपणम् | १७ |
| अथ तेजोनिरूपणम् | २३ |
| अथ वायुनिरूपणम् | ३३ |
| अथ आकाशनिरूपणम् | ३८ |
| अथ कालनिरूपणम् | ४० |
| अथ दिङ्निरूपणम् | ४१ |
| अथ आत्मनिरूपणम् | ४३ |
| अथ मनोनिरूपणम् | ४४ |
| अथ गुणनिरूपणे रूपनिरूपणम् | ४५ |
| अथ रसनिरूपणम् | ५१ |
| अथ गन्धनिरूपणम् | ५४ |
| अथ स्पर्शनिरूपणम् | ५७ |
| अथ संख्यानिरूपणम् | ६० |
| अथ परिमाणनिरूपणम् | ६२ |
| अथ पृथक्त्वनिरूपणम् | ६४ |
| अथ सयोगनिरूपणम् | ६५ |
| अथ विभागनिरूपणम् | ६६ |
| अथ परत्वापरत्वनिरूपणम् | ६७ |
| अथ गुरुत्वनिरूपणम् | ६९ |
| अथ द्रवत्वनिरूपणम् | ७० |
| अथ स्नेहनिरूपणम् | ७२ |
| अथ शब्दनिरूपणम् | ७३ |
| अथ बुद्धिनिरूपणम् | ७४ |
| अथ स्मृतिनिरूपणम् | ७५ |
| अथानुभवनिरूपणम् | ७६ |
| अथ यथार्थानुभवनिरूपणम् | ७८ |
| अयथार्थानुभवनिरूपणम् | ८१ |
| यथार्थानुभवबिभागनिरूपणम् | ८५ |
| तत्करणविभागनिरूपणम् | ८६ |
| करणत्वनिरूपणम् | ८६ |
| कारणत्वनिरूपणम् | ८६ |

समवायिकारणनिरूपणम् ८७
असमवायिकारणनिरूपणम् ८९
अथ निमित्तकारण निरूपणम् ८९
प्रत्यक्षनिरूपणम् ९२

## २. अथ अनुमान परिच्छेदः ९२

अनुमितिनिरूपणम् ९३
परामर्शनिरूपणम् ९४
व्याप्तिनिरूपणम् ९५
अनुमानविभागनिरूपणम् ९५
स्वार्थानुमाननिरूपणम् ९६
परार्थानुमानम् ९७
अन्वयव्यतिरेकि निरूपणम् ९८
केवलान्वयिनिरूपम् ९८
केवलव्यतिरेकिनिरूपणम् ९९
अथ पक्षनिरूपणम् १०१
अथ सपक्षनिरूपणम् १०१
अथ विपक्षनिरूपणम् १०१
अथ हेत्वाभासनिरूपणम् १०२
सव्यभिचारनिरूपणम् १०२
साधारणनिरूपणम् १०३
असाधारणनिरूपणम् १०६
अनुपसंहारिनिरूपणम् १०६
विरुद्धनिरूपणम् १०७
सत्प्रतिपक्षनिरूपणम् १०८
असिद्धि निरूपणम् १०९
बाधित निरूपणम् ११०

## ३. उपमानपरिच्छेदः १११

## ४. शब्दपरिच्छेदः ११२

आकांक्षानिरूपणम् ११४
योग्यतानिरूपणम् ११४
सन्निधिनिरूपणम् ११५
अयथार्थानुभवविभाग निरूपणम् ११५
अथ संशयनिरूपणम् ११५
विपर्ययनिरूपणम् ११७
अथ तर्कनिरूपणम् ११८
स्मृतिविभागनिरूपणम् ११८
अथ सुखनिरूपणम् ११९
दुःखनिरूपणम् ११९
इच्छाद्वेषप्रयत्न निरूपणम् १२०
धर्माधर्मनिरूपणम १२०
संस्कारविभाग निरूपणम् १२०
अथ वेगनिरूपणम् १२०
अथ कर्मनिरूपणम् १२२
सामान्य निरूपणम् १२३
विशेषनिरूपणम् १२४
समवायनिरूपणम् २२४
अभावनिरूपणम् २२५

।। श्रीः ।।

# अथ तर्कसंग्रहः प्रारभ्यते

( मूल, शाब्दबोध, दलकृत्य समेतम् )



**निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।**
**बालानां सुखबोधाय क्रियते तर्कसंग्रहः ।।**

अन्वय :–

विश्वेशं हृदि निधाय गुरुवंदनं विधाय बालानां सुख बोधाय मया तर्कसंग्रहः क्रियते ।

शब्दबोध प्रकार: –

१) विश्वस्य ईशः विश्वेशः तम् विश्वेशम् इति विग्रहः । विश्व शब्दस्य प्रपञ्च इत्यर्थः । षष्ट्याः नियम्यत्वमर्थः । प्रपञ्चस्य आधेयता संबंधेन षष्ट्यर्थ नियम्यतायामन्वयः । ईश शब्दस्य नियामकतावानर्थः । नियम्यतायाः निरूपितत्व संबंधेन नियामकतावान् इत्येकदेश नियामकतायामन्वयः । तथा च प्रपञ्चनिष्ठ नियम्यता-निरूपित नियामकतावान् । विश्वेशं इत्यत्र द्वितीयायाः विशेष्यत्वमर्थः । नियामकतावतः आधेयता संबंधेन विशेष्यतायामन्वयः ।

तथा च प्रपञ्चनिष्ठ नियम्यता निरूपित नियामकतावन्निष्ठ विशेष्यता ।

हृदि इत्यत्र हृच्छब्दस्य मन इत्यर्थः सप्तम्याः अधिकरणत्वं अर्थः । मनसः आधेयता संबंधेन अधिकरणतायामन्वयः । मनोनिष्ठ अधिकरणता ।

निधाय इत्यत्र नि पूर्वक धाञ् धातोः आधेयत्वप्रकारक आहार्य ज्ञानमर्थः। मनोनिष्ठ अधिकरणतायाः निरूपित्व संबंधेन आधेयत्वेऽन्वयः। विशेष्यतायाः निरूपकत्व संबंधेन ज्ञानेऽन्वयः ।

ल्यप् प्रत्ययस्य ध्वंसाधिकरण कालवृत्तित्वमर्थः। ज्ञानस्य स्वनिष्ट प्रतियोगिता निरूपकत्व संबंधेन ध्वंसाधिकरण कालवृत्तित्व इत्येकदेश ध्वंमेऽन्वयः। कालवृत्तित्वस्य आश्रयता सबंधेन क्रियते इत्यत्र कृञ् धात्वर्थ कृतौ अन्वयः। तथाच–प्रपञ्चनिष्ठ नियम्यता निरूपित नियामकतावन्निष्ठ विशेष्यता निरूपक मनोनिष्ठ अधिकरणता निरूपित आधेयत्वप्रकारक आहार्य ज्ञाननिष्ठ प्रतियोगिता निरूपक ध्वंसाधिकरण कालवृत्तित्वा श्रयाकृतिः।

२) गुरुवन्दनम् इत्यत्र गुरूणां वंदनम् इति विग्रहः। गुरु शब्दस्य ज्ञानोपदेशकर्ता इत्यर्थः। षष्ठ्याः विशेष्यत्वं अर्थः। तस्य आधेयता संबंधेन विशेष्यतायामन्वयः। वंदन शब्दस्य स्वावधिक उत्कृष्टत्व प्रकारक ज्ञानानुकूल व्यापार इत्यर्थः। विशेष्यतायाः निरूपकत्व संबंधेन स्वावधिक उत्कृष्टत्व प्रकारक ज्ञानानुकूल व्यापार इत्येकदेश ज्ञाने अन्वयः। द्वितीयायाः विषयत्वमर्थः। ज्ञानस्य आधेयता संबंधेन विषयतायामन्वयः।

विधाय इत्यत्र वि पूर्वक धाञ् धातोः कृतिरर्थः। विषयतायाः निरूपकत्व संबंधेन कृतौ अन्वयः। ल्यप् प्रत्ययस्य ध्वंसाधिकरण कालवृत्तित्वमर्थः। कृतेः स्वनिष्ट प्रतियोगिता निरूपकत्व संबंधेन ध्वंसाधिकरण कालवृत्तित्व इत्येलदेशः ध्वंमेऽन्वयः। तस्य आश्रयता संबंधेन क्रियते इत्यत्र कृञ् धात्वर्थ कृतौ अन्वयः।

तथा च ज्ञानोपदेशकर्तृनिष्ठ विशेष्यता निरूपक स्वावधिक-उत्कृष्टत्वप्रकारक ज्ञानानुकूल व्यापारनिष्ठ विषयतानिरूपक कृतिनिष्ठ प्रतियोगितानिरूपक ध्वंसाधिकरण कालनिवृत्तित्वाश्रया कृतिः।

३) बालानां इत्यत्र बाल शब्दस्य ग्रहणधारणपटवः इत्यर्थः। षष्ट्याः समवेतत्वमर्थः। तेषां निरूपितत्व संबंधेन समवेतत्वे अन्वयः। तथा च ग्रहणधारणपटु निरूपित समवेतत्वम्। समवेतत्वस्य आश्रयता संबंधेन बोध शब्दार्थ ज्ञानेऽन्वयः।

सुखेन बोधः सुखबोध तस्मै सुखबोधाय इति विग्रहः। सुख शब्दस्य अल्पायासमर्थः। तृतीयायाः प्रयोज्यत्वमर्थः। अल्पायसस्या

निरूपितत्व संबंधेन प्रयोज्यत्वेऽन्वयः। बोध शब्दस्य ज्ञानमर्थः। प्रयोज्यत्वस्य आश्रयता संबंधेन बोध शब्दार्थे ज्ञानेऽन्वयः। चतुर्थ्याः उद्देश्यत्वमर्थः। ज्ञानस्य आधेयता संबंधेन उद्देश्यतायामन्वयः। उद्देश्य तायाः निरूपकत्व संबंधेन क्रियतेइत्यत्र कृञ् धात्वर्थ कृतौ अन्वयः।

तथा च ग्रहण धारण पटु निरूपित समवेतत्वाश्रय, अल्पायास निरूपित प्रयोज्यत्वाश्रय ज्ञाननिष्ट उद्देशता निरूपिका कृतिः।

४) मया इति पदं अध्याहार्यम्। मया इत्यत्र अस्मच्छब्दस्य अन्नंभट्टः इत्यर्थः। तस्य निरूपितत्व संबंधेन तृतीयार्थ समवेतत्वे अन्वयः। (तस्य स्वनिष्ट अधिकरणता निरूपितत्व संबंधेन समवाय संबंधावच्छिन्न आधेयत्वे अन्वयः।) आधेयत्वस्य आश्रयता संबंधेन क्रियते इत्यत्र कृञ् धात्वर्थ कृतौ अन्वयः। कृतेः निरूपितत्व संबंधेन क्त प्रत्ययार्थ (आख्यात प्रत्ययार्थ) विषयतायां अन्वयः। विषयत्वस्य आश्रयता संबंधेन तर्कसंग्रह शब्दार्थे तर्कसंग्रहे अन्वयः।

तथाच समस्त प्रपञ्चनिष्ट नियम्यता निरूपित नियामकता वन्निष्ट विशेष्यता निरूपक मनोनिष्ट अधिकरणता निरूपित आधेयत्व प्रकारक आहार्यज्ञाननिष्ट प्रतियोगिता निरूपक ध्वंसाधिकरण कालवृत्तित्वाश्रय ज्ञानोपदेश कर्तृनिष्ट विशेष्यता निरूपक स्वावधिक उत्कृष्टत्वप्रकारक ज्ञानानुकूलव्यापारनिष्ठ विषयतानिरूपक कृतिनिष्ठ प्रतियोगितानिरूपक ध्वंसाधिकरणकालवृत्तित्वाश्रय (ग्रहणधारणपटुनिरूपित समवेतत्वाश्रय) ग्रहणधारणपटुनिष्ठ अधिकरणतानिरूपित समवाय संबंधावच्छिन्न आधेयत्वाश्रय, अल्पायासनिरूपित प्रयोज्यत्वाश्रय ज्ञाननिष्ठउद्देश्यता–निरूपक अन्नंभट्टनिष्ट अधिकरणता निरूपित समवायसंबंधावच्छिन्न आधेयत्वाश्रय कृतिनिरूपित विषयत्वाश्रयः तर्कसंग्रहः।

॥ इति अखंड शाब्दबोधः ॥

# अथ पदार्थनिरूपणम्

**।। द्रव्यगुणकर्म सामान्यविशेष समवायाभावाः सप्तपदार्थाः ।।**

अथ पदार्थान् विभजते द्रव्येति। द्रव्यं च गुणश्च कर्म च सामान्यं च विशेषश्च समवायश्च अभावश्च द्रव्यगुणकर्म सामान्य विशेष्या समवायाभावाः इति विग्रहः। द्रव्यादि अभावान्तपदस्य द्रव्यादि अभावान्तान्यतमः अर्थः। तस्य अभेद संबंधेन पदार्थ शब्दर्थ पदार्थेषु अन्वयः। सप्तपदस्य सप्तत्वसंख्याविशिष्टाः इत्यर्थः। सप्तत्वसंख्या विशिष्टस्य अभेदसंबंधेन पदार्थेषु अन्वयः। तथा च द्रव्याद्यभावान्तान्यतमा भिन्नाः पदार्थाः सप्तत्वसंख्या विशिष्टाभिन्नाः।

ननु पदार्थानां अनंतत्वात् कथं तेषां सप्तत्व संख्याविशिष्टत्वं इति चेत्—अत्र सप्त पदस्य लक्षणया सप्तत्व संख्यापर्याप्त्यधि करण विभाजक धर्मान्यतमवन्तः इत्यर्थः। पदार्थ पदस्य पदार्थाः इत्यर्दः। अन्यतमवतां अभेद संबंधेन पदार्थेषु अन्वयः। द्रव्याद्यभावान्तपदस्य लक्षणया द्रव्यत्वाद्यभावत्वांतान्यतम इत्यर्थः। तस्य अभेदसंबंधेन सप्तत्वसंख्या पर्याप्त्यधिकरण विभाजक धर्म अन्यतमस्मिन् अन्वयः।

तथा च—द्रव्यभावावाद्यभावत्वान्तान्यतमाभिन्न सप्तत्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतमवदभिन्नाः पदार्थाः। पदार्थानां अनन्तत्वेऽपि पदार्थ विभाजक धर्माः सप्तैव अतः न पूर्वोक्तदोषः।

# ३. अथ द्रव्यनिरूपणम्

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्म मनांसि नवैव**

पदार्थविभाजकवाक्ये द्रव्यस्य प्रथम प्राप्तत्वात् प्रथमतः द्रव्यं निरूपयति तत्रेति। पृथिवी च आपश्च तेजश्च वायुश्च आकाशं च कालश्च दिक् च आत्मा च मनश्च इति विग्रहः। तत्र इत्यत्र तत् शब्दस्य द्रव्यादि समुदायोऽर्थः। तृल् प्रत्ययस्य घटकत्वमर्थः। द्रव्यादि समुदायस्य निरूपितत्व संबंधेन घटकत्वे अन्वयः। घटकत्वस्य आश्रयता

संबंधेन द्रव्य शब्दार्थ द्रव्येषु अन्वयः। पृथिव्यादि मनोन्त पदस्य पृथिव्यादि मनोन्तान्यतमः अर्थः। तस्य अभेद संबंधेन द्रव्येषु अन्वयः। नवशब्दस्य नवत्वसंख्याविशिष्टानि अर्थः। तस्य अभेध संबंधेन द्रव्येष अन्वयः। तथा च–द्रव्यादि समुदायनिरूपित घटकत्वाश्रय द्रव्याणि पृथिव्यादि मनोंतान्यतमाभिन्नानि नवत्वसंख्या विशष्टाभिन्नानि।

द्रव्याणामनंतत्वेन कथं तेषां नवत्व संख्याविशिष्टत्वम् इति चेत् नवपदस्य लक्षणया नवत्वसंख्यापर्याप्त्यप्रिकरण विभाजक धर्मान्यतमवंति अर्थः। तेषां अभेद संबंधेन द्रव्येष्वन्वयः। पृथिव्यादि मनोन्तपदस्य लक्षणया पृथिव्यादि मनस्त्वांतान्यतम इत्यर्थः। तस्य अभेधसंबंधेन नवत्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतममस्मिन्नन्वयः। एव शब्दस्य नवत्वेतर संख्याशून्यानि इत्यर्थः। तेषां अभेध संबंधेन द्रव्येषु अन्वयः। तथा च–

द्रव्यादि समुदायनिरूपित घटकत्वाश्रय द्रव्याणि पृथिवीत्वादि मनस्त्वांतान्यतमाभिन्नानि नवत्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्य-तमवदभिन्नानि, नवत्वेतरसंख्या शून्याभिन्नानि।

# ४. अथ गुणनिरूपणम्

**रूप रसगंध स्पर्श संख्या परिमाण पृथक्त्व संयोग विभाग परत्वापरत्व गुरुत्व द्रव्यत्वस्नेह शब्दबुद्धि सुखदुःखेच्छा द्वेषप्रयन्न धर्माधर्म संस्काराश्चतुर्विंशति गुणाः॥**

अथ गुणान्निरूपयति रूपेति। रूपं च रसश्च गंधश्च स्पर्शश्च संख्या च परिमाणं च पृथक्त्वं च संयोगश्च विभागश्च परत्वं च अपरत्वं च गुरुत्वं च द्रवत्वं च स्नेहश्च शब्दश्च बुद्धिश्च सुखं च दुःखं च इच्छा च द्वेषश्च प्रयत्नं च धर्मश्च अधर्मश्च संस्कारश्च रूप रसगंध स्पर्शपरिमाण पृथक्त्व संयोग विभाग परत्वापरत्व गुरुत्व द्रवत्व स्नेह शब्द बुद्धि सुखदुःखेच्छा द्वेषप्रयत्न धर्माधर्म संस्काराः इति विग्रहः। अत्र शाब्द बोधप्रकारस्तु इत्थम्। अत्र गुणपदस्य गुणाः इत्यर्थः। चतुर्विंशति

पदस्य चतुर्विंशतित्वं संख्याविशिष्टाः इत्यर्थः। तस्य अभद संबंधेन गुणेष्वन्वयः रूपादि संस्कारान्तपदस्य रूपादि संस्कारांतान्यतम इत्यर्थः। तस्य अभेद संबंधेन गुणेष्वन्वयः। तथा च—रूपादि संस्कारांतान्यतमा भिन्नाः गुणाः चतुर्विंशतित्व संख्याविशिष्टभिन्नाः।

गुणानां अनंतत्वेन कथं तेषां चतुर्विंशतित्व संख्याविशिष्टत्वं इति चेत् अत्र चतुर्विंशति पदस्य लक्षणया चतुर्विंशतित्व संख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतमवन्तः इत्यर्थः। तेषां अभेद संबंधेन गुणेष्वन्वयः। रूपादि संस्कारांतपदस्य लक्षणया रूपत्वादि संस्कारत्वांतान्यतमा इत्यर्थः। तेषां अभेद संबंधेन विभाजक धर्मान्यतमस्मिन्नन्वयः।

तथा च—रूपत्वादि संस्कारत्वान्यतमाभिन्न चतुर्विंशतित्व संख्या पर्याप्त्यधिकरण विभाजक धर्मान्यतमवदभिन्नाः गुणाः।

# ५. अथ कर्मनिरूपणम्

**उत्क्षेपणापक्षेपणाकुंचनप्रसरण गमनानि पञ्च कर्माणि।**

उत्क्षेपणं च अपक्षेपणं च आकुंचनं च प्रसारणं च गमनं च उत्क्षेपणापक्षेपणाकुञ्चन प्रसारणगमनानि पञ्च कर्माणि इति विग्रहः।

अत्र पञ्चपदस्य पञ्चत्वसंख्याविशिष्टानि इत्यर्थः। तेषां अभेद संबंधेन कर्मसु अन्वयः। उत्क्षेपणादि गमनांतपदस्य उत्क्षेपणादि गमनांतान्यतम इत्यर्थः। तस्य अभेद संबंधेन कर्मसु अन्वयः।

तथा च—उत्क्षेपणादि गमनांतान्यतमभिन्नानि कर्माणि पञ्चत्व संख्याविशिष्टाभिन्नानि।

कर्मणां अनन्तत्वात् कथं तेषां पञ्चत्वसंख्याविशिष्टत्वं इति चेत् पञ्चपदस्य लक्षणया पञ्चत्व संख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतम वंतः इत्यर्थः। तेषां अभेदसंबंधेन कर्मसु अन्वयः। उत्क्षेपणादि गमनांतपदस्य उत्क्षेपणत्वादि गमनत्वांतान्यतम इत्यर्थः। तस्य अभेद संबंधेन पञ्चत्व संख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमस्मिन्नन्वयः।

तथा च उत्क्षेपणत्वादि गमनत्वांतान्यतमाभिन्न पञ्चत्वसंख्या-पर्याप्त्यधिकरण विभाजकधर्मान्यतमवदभिन्नानि कर्माणि ।

## ६. परमपरं चेति द्विविधं सामान्यम्

अत्र शाब्दबोधप्रकारस्तु इत्थं । द्वे विधे यस्य तत् द्विविधम् इति विग्रहः । यस्य इत्यत्र यच्छब्दस्य यत्पदार्थोऽर्थः । यस्य निरूपितत्व संबंधेन षष्टयर्थ आधेयत्वे अन्वयः । यन्निरूपित आधेयत्वं । विधा पदस्य विभाजक धर्मान्यतरौ अर्थः । आधेयत्व आश्रयता संबंधेन विभाजकधर्मयोरन्वयः । तथा च–यन्निरूपित आधेयत्वाश्रय विभाजक धर्मों । द्वि शब्दस्य द्वित्वसंख्यापर्याप्त्यधिकरणौ इत्यर्थः । तयोः अभेद संबंधेन विभाजकधर्मयोरन्वयः । तथा च– द्वित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मों यन्निरूपित आधेयत्वाश्रयौ इति विग्रहवाक्यजन्य शाब्द बोदः ।

समासवाक्यात् तु –" विग्रहवाक्यात् यादृश विशेष्य विशेषण भावापन्न शाब्दबोधो जायते समासवाक्यात् तद्विपरीत विशेष्य विशेषण भावापन्नशाब्दबोधो जायते " इति नियमात् । द्वित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावत् । तस्य अभेद संबंधेन सामान्ये अन्वयः । परशब्दस्य लक्षणया परसामान्यत्वमर्थः । तस्य अभेद संबंधेन विभाजक धर्मान्यतरस्मिन् अन्वयः । अपर शब्दस्य लक्षणया अपरसामान्यत्वमर्थः । तस्य अभेद संबंधेन विभाजक धर्मान्यतरस्मिन् अन्वयः । तथा च परसामान्यत्वाभिन्न अपरसामान्यत्वाभिन्न द्वित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्नं सामान्यम् ।

## ७. अथ विशेषनिरूपणम्

### नित्यद्रव्यवृत्तयो विशेषास्त्वनंता एव

अथ विशेषं निरूपयति नित्येति । नित्यद्रव्येषु वृत्तिः येषां ते नित्यव्यवृत्तयः । इति विग्रहः । नित्यानि च तानि द्रव्याणि नित्य

द्रव्याणि कर्मधारयसमासेन समस्यमानयो: पदार्थयो: अभेदसंबंधेन अन्वय: इति नियमात् नित्य द्रव्य पदस्य नित्याभिन्न द्रव्याणि इत्यर्थ: । नित्य द्रव्येषु इत्यत्र सप्तम्या: अधिकरणत्वमर्थ: । नित्यद्रव्याणां आधेयता संबंधेन सप्तम्यर्थ अधिकरणता मन्वय: । नित्यद्रव्यनिष्ठ अधिकरणता वृत्तिशब्दस्य आधेयत्वमर्थ: । अधिकरणताया: निरूपितत्व संसंधेन आधेयत्वेऽन्वय: । तथाच नित्यद्रव्यनिष्ठ अधिकरणता निरूपित आधेयत्वम् ।

येषामित्यत्र यच्छब्दस्य यत् पदार्थोऽर्थ: । षष्ट्या: आधेयत्वं अर्थ: । यस्य निरूपितत्व संबंधेन आधेयत्वऽन्वय: । आधेयत्वस्य आश्रयता संबंधेन नित्यद्रव्यनिष्ठ अधिकरणता निरूपित आधेयत्वे अन्वय: । तथाच नित्यद्रव्यनिष्ठ अधिकरणता निरूपित आधेयत्व यन्निरूपित आधेयत्वाश्रय: इति विग्रहवाक्यात शाब्दबोध: । समासवाक्यात् तु नित्यद्रव्यनिष्ठ अधिकरणता निरूपित आधेयतावन्त: । तेषां अभेद संबंधेन विशेषेषु अन्वय: । असन्त्वत्वं नाम संख्यात व्याप्य धर्मशून्यत्वं इत्यर्थ: । तेषां अभेद संबंधेन विशेषेष्वन्वय: । तथाच नित्यद्रव्यनिष्ठ अधिकरणता निरूपित आधेयतावदभिन्ना: विशेषा: संख्यात्व व्याप्य धर्मा: शून्या: ।

# ८. अथ समवायनिरूपणम्

## समवायस्त्वेक एव

अथ समवायं निरूपयति समवायेति । नित्यत्वे सति संबंधत्व समवायस्य लक्षणं । नित्यत्वमात्रोक्तौ आकाशे अतिव्याप्ति: । तद्वारणाय संबंधत्वाख्य दलं देयम् । संबंधत्वं समवायस्य लक्षणमित्ये वोक्तौ संयोगादौ अतिव्याप्ति: । अत: सत्यन्तं लक्षणे निवेशनीयम् । गुणगुणिनो: अवयवावयविनो: जातिव्यक्त्यो: क्रियाक्रियावतो: नित्यद्रव्य विशेषयो: संबंध: समवाय: । एकत्वं नाम स्वसजातीय द्वितीयरहितत्वम् एव कारस्य एकत्वेतर संख्या शून्यत्वम् । तस्य आश्रयता संबंधेन

समवायेऽन्वयः । तथाच स्वसजातीय द्वितीयरहितत्वाश्रयः समवायः एकत्वेतरसंख्याशून्यः ।

# ९. अथ अभावनिरूपणम्

**अभावश्चतुर्विधः । प्रागभावःप्रध्वंसाभावोऽत्यंता भावोऽन्योन्यभावश्चेति ।**

चतस्रः विधाः यस्य सः चतुर्विधः । चतस्रशब्दस्य चतुष्ट्व संख्या पर्याप्त्यधिकरणाः अर्थः । तेषां अभेद संबंधेन विधा शब्दार्थ विभाजक धर्मान्यतमवदित्येकदेश विभाजक धर्मान्यतमेषु अन्वयः । तथाच चतुष्ट्व संख्या पर्याप्त्यधिकरण विभाजक धर्मान्यतमवन्तः । यस्य इत्यत्र यच्छब्दस्य यत् इत्यर्थः । तस्य निरूपित्वसंबंधेन षष्ठ्यर्थ आधेयत्वेऽन्वयः । तथा च यनिरूपित आधेयत्वम् । तस्य आश्रयातासंबंधेन विभाजक धर्मान्यतमेष्वन्वयः । तथाच चतुष्ट्व संख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतमवन्तः यन्निरूपित आधेयत्वा–श्रयाः । इति विग्रहवाक्यजन्य शाब्दबोधः । समासवाक्यात् तु चतुष्ट्व संख्या पर्याप्त्यधिकरण विभाजक धर्मान्यातमनिष्ट आधेयतानिरूपित अधिकरणतावान् । तस्य अभेदसंबंधेन अभावेऽन्वयः । प्रागभावपदस्य लक्षणया प्रागभावत्वमर्थः । प्रध्वंसाभाव पदस्य लक्षणया प्रध्वंसा भावत्वमर्थः । अत्यंताभावपदस्य लक्षणया अत्यंताभावत्वमर्थः । अन्योन्याभावपदस्य लक्षणया अन्योन्याभावत्वमर्थः । प्रागभावत्वस्य अभेद संबंधेन विभाजक धर्मान्यतस्मिन्नन्वयः । प्रध्वंसाभावत्वस्य अभेद संबंधेन विभाजक धर्मान्यतमस्मिन्नन्वयः । अत्यंताभावत्वस्य अभेद संबंधेन विभाजक धर्मान्यतमस्मिन्नन्वयः । अन्योन्याभावत्वस्य अभेद संबंधेन विभाजक धर्मान्यतमस्मिन्नन्वयः । तथा च प्रागभावत्वाभिन्न प्रध्वंसाभावत्वाभिन्न अत्यंताभावत्वाभिन्न अन्योन्याभावत्वाभिन्न चतुष्ट्व संख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नः अभावः ।

# १०. अथ पृथिवीनिरूपणम्

## तत्र गंधवती पृथिवी ।

तत्र इत्यत्र तच्छब्दस्य पृथिव्यादि समुदायोऽर्थः । त्रल् प्रत्ययस्य घटकत्वमर्थः । पृथिव्यादि समुदायस्य निरूपितत्व संबंधेन घटकत्वेऽन्वयः । घटकत्वस्य आश्रयतासंबंधेन पृथिवीशब्दार्थ पृथिव्यामन्वयः । पृथिव्यादि समुदाय निरूपितघटकत्वाश्रया पृथिवी । गंधवती इत्यत्र गंधः अस्यामस्तीति गंधवती इति विग्रहः । अस्याम् इत्यत्र इदं शब्दस्य यत्पदार्थोऽर्थः । तस्य आधेयता संबंधेन सप्तम्यर्थ अधिकरणतायामन्वयः । यन्निष्ट अधिकरणता । अस् धातोः आधेयत्वमर्थः । अधिकरणतायाः निरूपितत्वसंबंधेन आधेयत्वेऽन्वयः । तस्य ति प्रत्ययार्थ आश्रयता संबंधेन गंध शब्दार्थ गंधेऽन्वयः । तथा च यत्पदार्थनिष्ट अधिकरता निरूपित आधेयत्वाश्रयः गंधः । इति विग्रह वाक्यजन्य शाब्दबोधः । समासवाक्यात् तु—तद्विपरीत विशेष्य विशेषण भावापन्नशाब्दबोधो जायते इति नियमात् गंधनिष्ट आधेयतानिरूपित अधिकरणतावती । तस्याः अभेद संबंधेन पृथिवीशब्दार्थ पृथिव्यामन्वयः । तथा च गंधनिष्ट आधेयतानिरूपित अधिकरणतावदभिन्ना पृथिवी ।

लक्षणसमन्वयः— इदं खलु लक्षणवाक्यम् । अनेन वाक्येन पृथिव्याः लक्षणं उच्यते । यस्य लक्षणमुच्यते तल्लक्ष्यमिति नियमात् पृथिवी लक्ष्या । लक्ष्यतावच्छेदकं पृथिवीत्वं । (लक्ष्यवृत्ति असाधारणधर्मो अर्थः ।) पृथिव्यां गंधो वर्तते । अतः पृथिव्यां गन्धवत्वम् आयातमिति लक्षणसमन्वयः ।

दलकृत्यं— ननु गन्धवत्वं पृथिव्याः लक्षणमित्युक्ते आद्यक्षणावच्छिन्न घटे अव्याप्तिः । कुतः इति चेत् उत्पन्नं द्रव्यं क्षणमगुणं अक्रियं च तिष्ठति इति नियमात्—घटे आद्यक्षणे गंधाख्य गुणो नास्ति । अतः अव्याप्तिः इति चेन्न । गंधाधिकरणत्वम् पृथिव्याः लक्षणम् इति ब्रूमः । घटे आद्यक्षणे गंधस्य अभावेऽपि द्वितीयक्षणे गंधस्य तत्र

संभवात् द्वितीयक्षणावच्छेदेन घटः गंधाधिकरणम् भवति। अतः गंधाधिकरणम् तत्र वर्तते इति नाव्याप्तिः।

एवं सति जले अतिव्याप्तिः। कालिकसंबंधेन गन्धस्य जलेऽपि सत्वात् गंधाधिकरणम् जलं भवति। गंधाधिकरणत्वं जले वर्तते इति अतिव्याप्तिः। अतः गंधाधिकरणत्वमित्यत्र गंधनिष्ठयामाधेयतायां समवायसंबंधावदिछन्नत्वम् निवेशनीयम्। तथा च समवायसंबंधावच्छिन्न गंधनिष्ट आधेयतानिरूपित अधिकरणतावत्वम् पृथिव्याः लक्षणमिति फलितम्। इदानीं जले नातिव्याप्तिः। कथमिति चेत् जले गन्धस्य कालिक संबंधेन सत्वेऽपि समवायसंबंधेनाभावात्। कथमिति चेत् यः (आधेय) यत्र (अधिकरणे) येन संबंधेन वर्तते, तन्निष्ठा आधेयता तत्संबंधावच्छिन्नाभवति इति नियमात्। अत्र गन्धः आधेयः पृथिवी अधिकरणम्। पृथिव्यां गन्धः समवाय संबंधेन वर्तते। अतः पृथिवीनिष्ठ अधिकरणता निरूपित गन्धनिष्ठ आधेयता समवासंबंधावच्छिन्ना अतः समवायसंबंधावच्छिन्न गंधनिष्ठ आधेयतानिरूपित अधिकरणत्वं पृथिव्यामेव न तु जले। अतः नातिव्याप्तिः।

एवं सति पुनः जले अतिव्याप्तिः। कुतः इति चेत् जले गंधस्य गन्धत्वेन रूपेण अभावेऽपि गुणत्वेन रूपेण सत्वात्। समवायसंबंधावच्छिन्न गुणत्वाच्छिन्न गंधनिष्ट आधेयता निरूपित अधिकरणतावत्वं जले वर्तते इति अतिव्याप्तिः। अतः गंधनिष्ठायां आधेयतायां गन्धत्वावच्छिन्नत्वं निवेशनीयम्। अतः समवायसंबंधावाच्छिन्न गन्धत्वावाच्छिन्न गन्धनिष्ठ आधेयतानिरूपित अधिकरणत्वं पृथिव्याः लक्षणम् इति फलितम्। इदानीं जले नातिव्याप्तिः। यः यत्र येन रूपेण अस्ति तन्निष्ठा आधेयता तद्धर्मावच्छिन्ना इति नियमात्। गन्धः आधेयः। अधिकरणम् पृथिवी। पृथिव्यां गन्धः गन्धत्वेन रूपेण अस्ति। अतः पृथिवी निष्ठ अधिकरणता निरूपित गन्धनिष्ठा आधेयता-गन्धत्वावच्छिन्ना। अतः समवायसंबंधावच्छिन्न गन्धत्वावच्छिन्न गन्धनिष्ठ आधेयता निरूपित अधिकरणत्वं पृथिव्याः लक्षणम् इत्युक्तं भवति।

इदानीं उत्पन्नविनष्ट घटे अव्याप्तिः। कुतः इति चेत् घटे आद्यक्षणे गन्धः नास्ति पूर्वोक्त नियमात्। द्वितीय क्षणे घटो नष्टः। अतः समवायसंबंधावच्छिन्न गन्धत्वावच्छिन्न गंधनिष्ठ आधेयता निरूपित अधिकरणत्वं उत्पन्न विनष्ट घटे नास्तीति अव्याप्तिः। अतः जातिघटित लक्षणं कुर्मः। गन्धसमानाधिकरणा या जातिः तादृश जातिमत्त्वं पृथिव्या लक्षणम्। गन्धसमानाधिकरणत्वं च गन्धाधिकरणवृत्तित्वमर्थः। गन्धनिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ अधिकरणता निरूपित आधेयत्वमर्थः। इदानीं उत्पन्नविनष्ट घटे नाव्याप्तिः। कथमिति चेत् घटे गन्धः वर्तते। गन्धः आधेयः घटो अधिकरणम्। आधेयता गन्धनिष्ठा अधिकरता घटनिष्ठा। तयोः निरूपितत्वम् संबन्धः। तथाच गन्धनिष्ट आधेयता निरूपित अधिकरणतावान् घटः। तत्र पृथिवीत्वं वर्तते। तन्निष्ट अधिकरणतानिरूपित आधेयतावती या जातिः पृथिवीत्वरूपा जातिः। तादृश जातिमत्त्वस्य उत्पन्नविनष्ट घटे सत्वान्नाव्याप्तिः।

एवमुक्ते पुनः जलेऽतिव्याप्तिः। समवायसंबंधावच्छिन्न गन्धत्वावच्छिन्न गन्धनिष्ट आधेयता निरूपित अधिकरणतावती पृथिवी। तद्वृत्ति या जातिः द्रव्यत्वरूपा जातिः तादृश जातिमत्त्वं जले सत्त्वात्-अतिव्याप्तिः इति चेत् जातौ द्रव्यत्वव्याप्यत्वं निवेशनीयम्। तथा च गन्धसमानाधिकरणा द्रव्यत्वव्याप्या या जातिः तादृशजातिमत्त्वं पृथिव्या लक्षणं इत्युक्तं भवति। इदानीं जले नातिव्याप्तिः। कुतः इति चेत् द्रव्यत्वजातेः गन्धसमानाधिकरणेऽपि द्रव्यत्व व्याप्यत्वाभावात् न द्रव्यत्वजातिः गृहीतुं शक्या। किंतु पृथिवीत्वरूपा जातिरेव। तादृश जातिमत्त्वं जले नास्तीति नातिव्याप्तिः।

इदानीं द्रव्यत्वजातिमादाय पुनः जले अतिव्याप्तिः। कुतः इति चेत् द्रव्यत्वव्याप्यत्वं नाम द्रव्यत्वाभाववदवृत्तित्वं अर्थः। द्रव्यत्वाभाववत् गुणादिः। तत्र द्रव्यत्वं नास्ति। अवृत्तित्वं द्रव्यत्वे अस्ति। अत जले अतिव्याप्तिः इति न वाच्यम्। द्रव्यत्वव्याप्यत्वं नाम द्रव्यत्वभाववद्

वृत्तित्वं इति नार्थः । किन्तु द्रव्यत्वसमानाधिकरण भेदप्रतियोगितावच्छेदकत्वे सति द्रव्यत्वसामानाधिकरण्यं अर्थः । इदानीं जले नातिव्याप्तिः। कुतः इति चेत् द्रव्यत्वजातेः द्रव्यत्वव्याप्यत्वं नास्ति । कथमिति चेत् द्रव्यत्वाधिकरणम् पृथिव्यादिकम् । तद्वृत्ति यो भेदः गुणादिभेदः नतु द्रव्यभेदः । भेदप्रतियोगि गुणादि प्रतियोगितावच्छेदकम् । गुणत्वादि नतु द्रव्यत्वम् अतः द्रव्यत्वजातेः द्रव्यत्वव्याप्यत्वम् नास्ति किन्तु पृथिवीत्व-रूपजातेरेव द्रव्यत्वव्याप्यत्वं संभवति । तत्कथमिति चेत्–द्रव्यत्वाधि-करणम् जलादिकं तद्वृत्ति यो भेदः पृथिवीभेदः भेदप्रतियोगि पृथिवी। प्रतियोगितावच्छेदकम् पृथिवीत्वं । तादृश जातिः पृथिवीत्वरूपा जातिरेव । तादृश जातिमत्वं जले नास्तीति नातिव्याप्तिः ।

एवं सति पुनः काले अतिव्याप्तिः । काले कालिक संबन्धेन गन्धस्य सत्त्वात् गन्धसमानाधिकरणा द्रव्यत्वव्याप्या या जातिः तादृश कालिक संबन्धावच्छिन्न जातिमत्त्वम् काले अस्तीति अतिव्याप्तिः । जाति निष्ठायामाधेयतायां समवायसंबंधावच्छिन्नत्त्वम् निवेशनीयम् । काले गन्धस्य कालिकसंबन्धेन सत्त्वेऽपि समवायसंबंधेनासत्वात् गन्ध-समानाधिकरणा द्रव्यत्त्वव्याप्या या जातिः समवायेन तादृश जातिमत्त्वं काले नास्तीति नातिव्याप्तिः ।

तथा च समवायसंबन्धावाच्छिन्न गन्धत्वावच्छिन्न गन्धनिष्ट आधेयतानिरूपित अधिकरणतावन्निष्ठ अधिकरणतानिरूपित आधेयतावती द्रव्यत्वसमानाधिकरण भेद प्रतियोगितावच्छेदिका या जातिः समवायेन तादृश जातिमत्वं पृथिव्याः लक्षणमिति फलितम् ।

अथ घटे लक्षणसमन्वयः– घटे गन्धः गन्धत्वेन रूपेण समवाय-संबन्धेन वर्तते । अतः समवायसम्बन्धावच्छिन्न गन्धत्वाच्छिन्न गन्धनिष्ठ आधेयता निरूपित अधिकरणतावान् घटः । तद्वृत्ति द्रव्यत्वव्याप्या या जातिः पृथिवीत्वरूपा जातिः । तादृश जातिमत्वं घटे अस्तीति लक्षससमन्वयः ।

## सा द्विविधा नित्याऽनित्या चेति।

अथ पृथिवीं विभजते सेति। द्वे विधे यस्याः सा इति विग्रहः। यस्याः इत्यत्र षष्ट्याः आधेयत्वमर्थः। यच्छब्दस्य (पृथिवी इत्यर्थः)। यत् स्यात्। तस्य निरूपितत्वसंबन्धेन आधेयत्वे अन्वयः। विधा शब्दस्य विभाजक धर्मो इत्यर्थः। यन्निरूपित आधेयत्वस्य आश्रयता संबन्धेन विभाजक धर्मान्यतरयोः अन्वयः। द्वि शब्दस्य द्वित्वसंख्या-विशिष्टौ इत्यर्थः। तथा च यन्निरूपित आधेयत्वाश्रय विभाजक धर्मौ द्वित्वसंख्याविशिष्टाभिन्नौ इति विग्रहवाक्यजन्यबोधः। समासवाक्यात् तद्विपरीत बोधो जायते इति नियमात् द्वित्वसंख्याविशिष्ट विभाजक धर्मान्यतरनिष्ठ आधेयतानिरूपित अधिकरणतावती तस्याः अभेदसंबंधेन पृथिव्यामन्वयः।

नित्यशब्दस्य लक्षणया नित्यपृथिवीत्वमर्थः। तस्य अभेदसंबन्धेन विभाजक धर्मान्यतरस्मिन्नन्वयः। अनित्यशब्दस्य लक्षणया अनित्य अनित्यपृथिवीत्वमर्थः तस्य अभेदसंबंधेन विभाजकधर्मान्यतरस्मिन्नन्वयः। नित्यपृथिवीत्वाभिन्न अनित्यपृथिवीत्वत्वाभिन्न द्वित्वसंख्याविशिष्ट विभाजक धर्मान्यतरनिष्ट आधेयतानिरूपित अधिकरणतावदभिन्ना पृथिवी।

## नित्या परमाणुरूपा। अनित्या कार्यरूपा।

रूपशब्दस्य अभेदोऽर्थः। परमाणोः रूपशब्दार्थे अभेदसंबन्धेन पृथिव्यामन्वयः। तथा च परमाण्वभिन्ना पृथिवी नित्या। कार्यरूपा इत्यत्र रूप शब्दस्य अभेदो अर्थः। कार्यस्य रूपशब्दार्थे अभेदसंबंधेन पृथिव्यामन्वयः। तथा च कार्याभिन्ना पृथिवी अनित्या इति शाब्दबोधः।

## पुनस्त्रिविधा शरीरेंद्रियविषयभेदात्।

त्रिविधा इत्यत्र तिस्रः विधाः यस्याः सा त्रिविधेति विग्रहः। यस्या इत्यत्र यच्छब्दस्य पृथिवी इत्यर्थः। षष्ठ्याः आधेयत्वं अर्थः।

पृथिव्याः निरूपितत्व संबन्धेन षष्टचर्थ आधेयत्वेऽन्वयः । आधेयत्वस्य आश्रयता संबन्धेन विभाजकधर्मान्यतमस्मिन् अन्वयः । तथा च पृथिवी निरूपित आधेयत्वाश्रय विभाजकधर्माः । त्रिशब्दस्य त्रित्वसंख्या विशिष्टाः इत्यर्थः । तस्य अभेदसंबन्धेन विभाजकधर्मान्यतमेष्वन्वयः । तथा च पृथिवी निरूपित आधेयत्वाश्रय विभाजकधर्माः त्रित्वसंख्या-विशिष्टाभिन्नाः इति विग्रहवाक्यजन्यबोधः । समासवाक्यात् त्रित्वसंख्या विशिष्टाभिन्न विभाजकधर्मान्यतमनिष्ठ आधेयता निरूपित अधिकरण-तावती इत्यर्थः । तस्याः अभेदसंबन्धेन पृथिव्यामन्वयः ।

पुनश्शब्दस्य पूर्वोक्त विभाजकधर्मभेदो इत्यर्थः । तेषां आश्रयता संबन्धेन त्रित्वसंख्याविशिष्ट विभाजकधर्मान्यतमेषु अन्वयः ।

शरीराणि च इंद्रियाणि च विषयाश्च शरीरेंद्रियविषयाः। विषयाणां भेदः । विषयभेदः । तस्मात् शरीरेंद्रिय विषयभेदात् । शरीरेंद्रिय विषयणाम् इत्यत्र षष्ठ्याः आधेयत्वमर्थः । शरीरेंद्रियविषय शब्दस्य शरीरेंद्रियविषया इत्यर्थः । विषयाणां निरूपितत्वसंबंधेन षष्टचर्थ आधेयत्वेऽन्वयः । भेदशब्दस्य असाधारण धर्माः इत्यर्थः । आधेयत्वस्य आश्रयतासंबंधेन असाधारण धर्मेषु अन्वयः । पञ्चम्याः अभेदोऽर्थः असाधारण धर्मस्य पञ्चम्यर्थ अभेदसंबंधेन त्रित्वसंख्याविशिष्ट विभाजक धर्मान्यतमेष्वन्वयः ।

तथा च पूर्वोक्त विभाजक धर्मभिन्न शरीरेंद्रियविषय निरूपित आधेयत्वाश्रय असाधारण धर्माभिन्न त्रित्वसंख्या पर्याप्त्यधिकरण विभाजकधर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्ना पृथिवी ।

## शरीरमस्मदादीनाम् ।

अस्मदादीनामित्यत्र षष्ठ्याः अवच्छेदकत्वमर्थः । अस्मदादि शब्दस्य अस्मदादयः इत्यर्थः । तस्य निरूपितत्वसंबंधेन षष्ठचर्थ अवच्छेदकत्वे अन्वयः । अवच्छेदकत्वस्य आश्रयतासंबंधेन शरीरेऽन्वयः । तथा च अस्मदादिनिरूपित अवच्छेदकत्वाश्रयः शरीरम् ।

## इंद्रियं गंधग्राहकम् घ्राणम् ।

गंधस्य ग्राहकं गंधग्राहकम् । गंध शब्दस्य गंध इत्यर्थः । षष्ठ्याः विषयत्वमर्थः । गंधस्य आधेयता संबंधेन षष्ठ्यर्थ विषयता. यामन्वयः । ग्रह् धातोः ज्ञानमर्थः । विषयतायाः निरूपकत्वसंबंधेन ज्ञाने अन्वयः । गंधनिष्ठ विषयतानिरूपक ज्ञानम् । ण्वुल् प्रत्ययस्य जनकतावदित्यर्थः । ज्ञानस्य निरूपितत्वसंबंधेन जनकतावदित्येकदेश जनकतायामन्वयः । जनकतावतः अभेद संबंधेन इंद्रियेन्वयः । घ्राणस्य अभेद संबंधेन इंद्रिये अन्वयः ।

तथा च—गंधनिष्ठविषयतानिरूपक ज्ञाननिरूपित जनकतावपभिन्नं घ्राणाभिन्नं इंद्रियम् ।

## तच्च नासाग्रवर्ति ।

नासाग्रे वर्तते इति नासाग्रवर्ती । नासाग्रे इत्यत्र सप्तम्याः अधिकरणत्वमर्थः । नासाग्रस्य आधेयता संबंधेन अधिकरणतायामन्वयः । नासाग्रनिष्ठ अधिकरणता । वर्तते इत्यत्र वृत धातोः आधेयत्वमर्थः । अधिकरणतायाः निरूपितत्व संबंधेन आधेयत्वेऽन्वयः । आधेयत्वस्य आश्रयता संबंधेन तच्छब्दार्थ इंद्रियेऽन्वयः । तथा च—नासाग्रनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयं घ्राणेंद्रियम् ।

## विषयो मृत्पाषाणादिः ।

मृच्च पाषाणश्च मृत्पाषाणौ आदी यस्य सः । मृत्पाषाणादिः । इति विग्रहः । यस्य इत्यत्र यच्छब्दस्य समुदायोऽर्थः । षष्ठ्याः घटकतावती इत्यर्थः । समुदायस्य निरूपितत्व संबंधेन घटकत्वादित्येक देश घटकतायामन्वयः । तथा च – समुदायनिरूपित घटकतावन्तौ । मृत्पाषाणशब्दस्य मृत्पाषाणौ इत्यर्थः घटकतावतोः अभेद संबंधेन मृत्पाषाणयोरन्वयः । तथा च – समुदायनिरूपित घटकतावदभिन्नौ मृत्पाषाणौ इति विग्रहवाक्यजन्यबोधः ।

समासवाक्यात् तद्विपरीतबोधो जायते इति नियमात् तथा च मृत्पाषाणनिष्ठ घटकतानिरूपित घटिततावदभिन्नः समुदायाभिन्नः विषयः।

# अथ जलनिरूपणम्

## शीतस्पर्शवत्यः आपः।

शीतश्चासौ स्पर्शश्च शीतस्पर्शः। शीतस्पर्शः आसु अस्ति इति शीतस्पर्शवत्यः। कर्मधारय समासेन समस्यमानयोः पदार्थयोः अभेद संबंधेन अन्वयः इति नियमात् शीताभिन्नस्पर्शः। आसु इत्यत्र इदं शब्दस्य आपः इत्यर्थः। सप्तम्याः अधिकरणत्वमर्थः। अपाम् आधेयता संबंधेन अधिकरणतायामन्वयः। अब्निष्ठ अधिकरणता। अस्ति इत्यत्र अस् धातोः आधेयत्वमर्थः। अधिकरणताया निरूपितत्वसंबंधेन आधेयत्वेऽन्वयः। अब्निष्ठ अधिकरणतानिरूपित आधेयत्वम्। आधेयत्वस्य 'ति' प्रत्ययार्थे आश्रयता संबंधेन शीताभिन्नस्पर्शेऽन्वयः। तथा च अब्निष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयः शीताभिन्नस्पर्श इति विग्रहवाक्यजन्य शाब्दबोधः।

शीताभिन्नस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावत्यः आपः इति समासवाक्यजन्य शाब्दबोधः। अधिकरणतावताम् अभेदसंबंधेन अप्सु अन्वयः। तथा च शीताभिन्नस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नाः आपः।

इदम् खलु लक्षणवाक्यम्। अनेन वाक्येन अपाम् लक्षणमुच्यते। शीतस्पर्शवत्वम् अपाम् लक्षणम्। अत्र लक्ष्यम् (आपः) जलम्। लक्ष्यतावच्छेदकम् जलत्वम्। लक्षतावच्छेदकावच्छिन्नम् जलम्। जले शीतस्पर्शः वर्तते। शीतस्पर्शवत् जलं भवति। शीतस्पर्शवत्वं जले वर्तते इति लक्षणसमन्वयः।

ननु शीतस्पर्शवत्वं जलस्य लक्षणमित्येवोक्ते आद्यक्षणावच्छिन्न जले अव्याप्तिः। कुतः इति चेत् उत्पन्नं द्रव्यं क्षणमगुणं अक्रियाकं चतिष्ठति इति नियमात् जले आद्यक्षणे शीतस्पर्शाख्यगुणो नास्ति। अतः अव्याप्तिः इति चेत् शीतस्पर्शाधिकरणत्वम् (अधिकरणतायोग्यत्वम्)

जलस्य लक्षणमिति वदामः । जले इदानीं नाव्याप्तिः कथमिति चेत् जले आद्यक्षणावच्छेदेन शीतस्पर्शस्य अभावेऽपि द्वितीयक्षणावच्छेदेन शीतस्पर्शस्य सत्वात् शीतस्पर्शाधिकरणत्वयोग्यत्वं वर्तते । अतः नाव्याप्तिः ।

एवमपि उत्पन्नविनष्ट जले अव्याप्तिः कुतः इति चेत् जले आद्यक्षणे शीतस्पर्शाख्यगुणो नास्ति । द्वितीय क्षणे जलं नष्ठम् । अतः तादृश जले शीतस्पर्शाधिकरणत्वम् नास्ति अतः अव्याप्तिः इति चेन्न । जातिघटित लक्षणं कुर्मः । शीतस्पर्शसमाधिकरणा या जातिः तादृश जातिमत्वं जलस्य लक्षणम् । शीतस्पर्शसमानाधिकरणत्वं च शीतस्पर्शाधिकरणवृत्तित्वं शीतस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ अधिकरणतानिरूपित आधेयत्वम् । इदानीं उत्पन्नविनष्टजले नाव्याप्तिः । जले शीतस्पर्शो वर्तते । जलं अधिकरणम् । अधि–करणता जलनिष्ठा । शीतस्पर्शः आधेयः । आधेयता शीतस्पर्शनिष्ठा । अतः तयोः निरूपितत्वं संबंधः ।

तथा च शीतस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणत्वात् जलम् । तन्निष्ठ अधिकरणतानिरूपित आधेयतावती या जातिः जलत्वरूपा जातिः । तादृशजातिमत्वं उत्पन्नविनष्ट जले अस्तीति नाव्याप्तिः ।

एवमपि पृथिव्यां अतिव्याप्तिः । कथमिति चेत् शीतस्पर्शस्य कालिकसंबंधेन पृथिव्यां सत्वात् कालिकसंबंधावच्छिन्न शीतस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावती पृथिवी । तन्निष्ठ अधिकरणता-निरूपित आधेयतावती या जातिः पृथिवीत्वरूपा जातिः । तादृश जातिमत्वं पृथिव्यां अस्तीति अतिव्याप्तिः । इति चेत् शीतस्पर्शनिष्ठायां आधेयतायां समवायसंबंधावच्छिन्नत्वं निवेशनीयम् । अतः समवायसंबं-धावच्छिन्न शीतस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ अधिकरणतानिरूपित आधेयतावती या जातिः तादृश जातिमत्वं जलस्य लक्षणम् । इदानीं नातिव्याप्तिः । कुतः इति चेत् पृथिव्यां कालिक-संबंधेन शीतस्पर्शस्य सत्वेऽपि समवायसंबंधेन पृथिव्यां नास्तीति नातिव्याप्तिः ।

अत: समवायसंबंधावच्छिन्न शीतस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावती न पृथिवी। किन्तु जलं एव। तन्निष्ठ अधिकरणता निरूपित आधेयतावती या जातिः जलत्वरूपा जातिः। तादृश जातिमत्वं पृथिव्यां नास्तीति नातिव्याप्तिः।

एवमपि पुनः पृथिव्यां अतिव्याप्तिः। कथमिति चेत् पृथिव्यां शीतस्पर्शस्य शीतस्पर्शत्वेन रूपेण अभावेऽपि गुणत्वेनरूपेण वर्तते। अत: समवायसंबंधावच्छिन्न गुणत्वावच्छिन्न शीतस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावती पृथिवी। तन्निष्ठ अधिकरणतानिरूपित आधेयतावती या जातिः पृथिवीत्वरूपा जातिः। तादृश जातिमत्वं पृथिव्यां अस्ति। अत: अतिव्याप्तिः इति चेत् शीतस्पर्शनिष्ठ आधेयतायां शीतस्पर्शत्वावच्छिन्नत्वं निवेशनीयम्। इदानीं न अतिव्याप्तिः। पृथियां शीतस्पर्शस्य गुणत्वेन रूपेण सत्वेऽपि शीतस्पर्शत्वेन रूपेण अभावात्। अतः समवायसंबंधा-वच्छिन्न शीतस्पर्शत्वावच्छिन्न शीतस्पर्शनिष्ठ आधेयतानिरूपित अधिकरण तावती न पृथिवी किन्तु जलमेव। तद्वृत्तिः या जातिः जलत्वरूपा जातिः। तादृशजातिमत्वं पृथिव्यां नास्तीति नातिव्याप्तिः।

इदानीं पुनः पृथिव्यां अतिव्याप्तिः। समवायसंबंधावच्छिन्न शीतस्पर्शत्वावच्छिन्न शीतस्पर्शनिष्ठ आधेयता निरूपित अधिकरणतावत् जलं। तद्वृत्तिः या जातिः द्रव्यत्वरूपा जातिः। वादृश जातिमत्वं पृथिव्यां अस्ति। अनः अतिव्याप्तिरिति चेन्न। जातौ द्रव्यत्व व्याप्यत्वं निवेशनीयम्। अतः शीतस्पर्शसमानाधिकरणा द्रव्यत्व व्याप्या या जातिः तादृशजातिमन्वं जलस्य लक्षणम्। द्रव्यत्वजाति मादाय पृथिव्यां इदानीं जातिव्याप्तिः। कथमिति चेत् द्रव्त्वजातेः शीतस्पर्शसामानाधिकरण्येऽपि द्रव्यत्वव्याप्यत्वाभावात् न द्रव्यत्वजातिः गृहीतुं शक्या। किन्तु जलत्वजातिरेव। तादृशजातिमत्वं पृथिव्यां नास्तीति नातिव्याप्तिः। इदानीं द्रव्यत्वजातिमादाय पृथिव्यां पुनः अतिव्याप्तिः। द्रव्यत्वव्याप्यत्वं नाम नाम द्रव्यत्वाभाववदवृत्तित्वमर्थः। द्रव्यत्वाभाववत् गुणादि। तत्र द्रव्यत्वं नास्ति अतः अवृत्तित्वं द्रव्यत्वे अस्ति। अतः अतिव्याप्तिः इति चेन्न। द्रव्यत्वव्याप्यत्वं द्रव्यत्वा–

भाववदवृत्तित्वं इति नार्थः। किन्तु द्रव्यत्व समानाधिकरण भेदप्रति योगितावच्छेदकत्वे सति द्रव्यत्वसामानाधिकरण्यं। इदानीं पृथिव्यां नातिव्याप्तिः। कुतः इति चेत् द्रव्यत्वजातेः द्रव्यत्वव्याप्यत्वं नास्ति। कथमिति चेत् द्रव्यत्वाधिकरणं जलादिकम्। तद्वृत्ति यो भेदः। गुणादि भेदः न तु द्रव्यभेदः। भेदप्रतियोगि गुणादि। भेदप्रतियोगि तावच्छेदकं गुणत्वादिकं न तु द्रव्यत्वम्। अतः द्रव्यत्वजातेः द्रव्यत्व व्याप्यत्वं नास्ति। परं तु द्रव्यत्वव्याप्यत्वं पृथिवीत्वादिरूपजातेरेव संभवति। कथमिति चेत्—द्रव्यत्वाधिकरणं पृथिव्यादिकम्। तद्वृत्ति यो भेदः जलभेदः भेदप्रतियोगि जलम्। प्रतियोगितावच्छेदकं जलत्वम्। सामानाधिकरण्यमपि वर्तते। द्रव्यत्वाधिकरणं जलम्। तत्र जलत्वं वर्तते। अतः या जातिः जलत्वरूपा जातिः। तादृशजातिमत्वं पृथिव्यां नास्तीति नातिव्याप्तिः।

अतः समवायसंबंधाच्छिन्न शीतस्पर्शत्वावच्छिन्न शीतस्पर्शनिष्ठ आधेयता निरूपित अधिकरणतावन्निष्ठ अधिकरणतानिरूपित आधेय तावती द्रव्यत्वसमानाधिकरण भेदप्रतियोगितावच्छेदिका या जातिः सम वायेन तादृश जातिमत्वं जलस्य लक्षणं इति लक्षणसमन्वयः।

जले शीतस्पर्शः शीतस्पर्शत्वेन रूपेण समवाय संबंधेन वर्तते। अतः जलं अधिकरणं शीतस्पर्शः आधेयः। तथा च अधिकरणता जलनिष्ठा। आधेयता शीतस्पर्शनिष्ठा। तयोः निरूपितत्वं संबंधः। एवं च समवाय संबंधावच्छिन्न शीतस्पर्शत्वावच्छि शीतस्पर्शनिष्ठ आधे यता निरूपित अधिकरणतावत् जलम्। तन्निष्ठ अधिकरणता निरूपित आधेयतावती द्रव्यत्वव्याप्या या जातिः जलत्वरूपा जातिः। तादृश जातिमत्वं जले वर्तते इति लक्षणसमन्वयः।

अथ जलं विभजते ताः इति।

## ताः द्विविधाः नित्याऽनित्याश्चेति।

शाब्दबोधप्रकारस्तु पूर्ववत्। नित्यजलत्वाभिन्न अनित्यजलत्वा-भिन्न द्वित्वसंख्या विशिष्ट विभाजकधर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्ना आपः।

पुनः जलं विभजते पुनरिति।

**पुनस्त्रिविधा। शरीरेंद्रिय विषयभेदात्।**

शरीराणिच इंद्रियाणिच विषयाश्च शरीरेंद्रिविषयाः। तेषां भेदः। विषयभेदः। तस्मात् शरीरेंद्रियविषयभेदात्। शरीरेंद्रियविषयाणां इत्यत्र षष्ठयाः आधेयत्वं अर्थः। शरीरेंद्रियविषयाणां स्वनिष्ठ अधिकरणता निरूपितत्वसंबंधेन आधेयत्वे अन्वयः। तथाच शरीरेंद्रिय-विषयनिरूपित आधेयत्वम्। तिस्रः विधाः यस्याः सा त्रिविधा। इति विग्रहः। तिस्र पदस्य त्रित्वसंख्याविशिष्ठा अर्थः। तेषां अभेदसंबंधेन विधा शब्दार्थ विभाजकधर्मान्यितमेष्वन्वयः। त्रित्वसंख्याविशिष्टाभिन्न विभाजक धर्मः। यस्य इत्यत्र यच्छब्दस्य यत् अर्थः। षष्ठयाः आधेयत्वमर्थः। यच्छब्दस्य निरूपितत्वसंबंधेन आधेयत्वेन्वयः। यन्निरूपित आधेयत्वं। तस्य आश्रयतासंबंधेन विभाजक धर्मान्यत-मेष्वन्वयः। तथाच त्रित्व संख्याविशिष्ठाभिन्नविभाजकधर्माः यन्निरूपित आधेयत्वाश्रयाः इति विग्रहवाक्यजन्यशाब्दबोधः। समासवाक्यात् त्रित्वसंख्याविशिष्ठ विभाजक धर्मान्यतमनिष्ठ आधेयत्वनिरूपित अधिकरणतावत्यः। तासां अभेदसंबंधेन अप्सु अन्वयः।

तथा च त्रित्वसंख्याविशिष्ट विभाजकधर्मान्यतमनिष्ठ आधेयता-निरूपित अधिकरणतावदभिन्नाः आपः।

शरीरेंद्रियनिरूपित आधेयत्वस्य आश्रयतासंबंधेन भेदशब्दार्थ असाधारण धर्मेष्वन्वयः। असाधारणधर्माणां अभेदसंबंधेन विभाजक धर्मान्यतमेष्वन्वयः।

पुनः शब्दस्य पूर्वोक्तविभाजक धर्मभिन्नः अर्थः तस्य अभेदसंबंधेन विभाजक धर्मान्यतमेष्वन्वयः। तथाच पूर्वोक्त विभाजक धर्माभिन्न शरीरेंद्रिय विषयनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रय असाधारण धर्माभिन्न त्रित्वसंख्याविशिष्ठ विभाजक धर्मान्यतमवदभिन्नाः आपः।

अथ क्रमप्राप्तम् शरीरं निरूपयति शरीरमिति।

## शरीरं वरुणलोके ।

वरुणस्य लोकः। तस्मिन् वरुणलोके। वरुणस्य इत्यत्र षष्टचाः नियम्यत्वं अर्थः। वरुणस्य निरूपितत्वसंबंधेन नियम्यतायां अन्वयः। नियम्यतायाः आश्रयता संबंधेन लोक शब्दार्थ लोके अन्वयः। लोकस्य निरूपितत्वसंबन्धेन सप्तम्यर्थ आधेयतावदित्येकदेश आधेयतायां अन्वयः। आधेयतावतः अभेदसंबन्धेन शरीरे अन्वयः।

तथाच वरुणनिष्ठ नियामकतानिरूपित नियम्यताश्रय लोकनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नं शरीरम्।

अथ इन्द्रियं निरूपयति :–

## इंद्रियं रसग्राहकम् रसनम्

रसस्य ग्राहकम् रसग्राहकम्। रसस्य इत्यत्र षष्ठयाः विषयता अर्थः रसस्य आधेयतासंबंधेन विषयतायां अन्वयः। रसनिष्ठविषयता। ग्राहकम् इत्यत्र ग्रह धातोः ण्वुल् प्रत्ययः। रसनिष्ठ विषयतायाः निरूपकत्वसंबन्धेन ग्रह धात्वर्थ ज्ञानेऽन्वयः। ज्ञानस्य स्वनिष्ठ जन्यता निरूपितत्वसंबन्धेन जनकतावदित्येकदेश जनकतायामन्वयः। जनकतावतः अभेदसंबंधेन इंद्रियेऽन्वयः। रसनशब्दस्य रसनमर्थः। तस्य अभेद-संबन्धेन इंद्रियेऽन्वयः तथाच रसनिष्ठविषयतानिरूपक ज्ञाननिष्ठजन्यता निरूपित जनकतावदभिन्नं इंद्रियं रसनाभिन्नम्।

रसनेंद्रियस्य अधिकरणमाह–

## तच्च जिव्हाग्रवर्ती ।

जिव्हायाः अग्रं जिव्हाग्रं तस्मिन् वर्तते इति जिव्हाग्रवर्ती। जिव्हाग्रे इत्यत्र सप्तम्याः अधिकरणत्वमर्थः। जिव्हाग्रस्य आधेयता संबंधेन अधिकरणतायामन्वयः। अधिकरणतायाः निरूपितत्व संबंधेन वृत धात्वर्थ आधेयतावदित्येकदेश आधेयतायामन्वयः। तथा च जिव्हाग्र निष्ठ अधिकरणतानिरूपित आधेयतावत्। तस्य अभेदसंबंधेन तच्छब्दार्थ रसनेंद्रिये अन्वयः। तथा च जिव्हाग्रनिष्ठ अधिकरणता निरूपित आधेयतावदभिन्नं रसनेंद्रियम्।

रूपगन्धस्पर्शाग्राहकत्वे सति रसग्राहकत्वं रसनेंद्रियलक्षणम् ।

रसग्राहकत्वं रसनेंद्रियस्य लक्षणमित्युक्ने आत्मादौ अतिव्याप्तिः । अतः रूपगन्धस्पर्शाग्राहकत्वं उक्तम् । आत्मनः रूपगन्धस्पर्शग्राहकत्वात् । अग्राहकत्वं नास्तीति अतिव्याप्तिः ।

रूपगधस्पर्शाग्राहकत्वं रसनेंद्रियस्य लक्षणं इत्येवोक्तौ घटपटादौ अतिव्याप्तिः । अतः रसग्राहकत्वं इत्युक्तम् ।

अथ विषयं निरूपयति विषयः इति ।

**विषयः सरित्समुद्रादिः ।**

सरिच्च समुद्रश्च सरित्समुद्रौ, सरित्समुद्रौ आदी यस्य सः सरित्समुद्रादिः । यत् शब्दस्य समुदायः अर्थः । षष्ठ्याः घटितत्वमर्थः । समुदायस्य आधेयता संबंधेन घटिततायामन्वयः । समृदायनिष्ठ घटितता। सरित्समुद्रशब्दस्य सरित्समुद्रौ अर्थः । आदि पदस्य घटकताबंतौ अर्थः । घटिततायाः निरूपितत्व संबंधेन एकदेश घटकतावयामन्वयः । समुदायनिष्ठ घटिततानिरूपित घटकताबंतौ । तयोरभेदसंबंमेन सरित्समुद्र योरन्वयः । तथा च समुदायनिष्ठ घटितता निरूपित घटकतावदभिन्नौ सरित्समुद्रौ इति विग्रहवाक्यबोधः । समासवाक्यात् सरित्समुद्रनिष्ट घटकता निरूपित घटिततावदभिन्नः समुदायः । समुदायस्य अभेद संबंधेन विषयेन्वयः ।[1] तथा च सरित्समुद्रनिष्ठ घटकतानिरूपित घटिततावदभिन्न समुदायाभिन्नः विषयः ।

# अथ तेजो निरूपणम्

अथ तेजो निरूपयति उष्णस्पर्शवदिति ।

**उष्णस्पर्शवत्तेजः ।**

उष्णश्चासौ स्पर्शश्च उष्णस्पर्शः । उष्णस्पर्शः अस्मिन् अस्तीति उष्णस्पर्शवत् । अस्मिन् इत्यत्र इदं शब्दस्य यत्किंचिद्वस्तु इत्यर्थः । तस्य आधेयतासंबंधेन सप्तम्यर्थ अधिकरणतायां अन्वयः । यत्किंचिद्वस्तुनिष्ठ अधिकरणता । तस्याः निरूपितत्व संबंधेन अस् धात्वर्थं

आधेयत्वेऽन्वयः । तथा च यत्किंचिद्वस्तुनिष्ठ अधिकरणतानिरूपित आधेयत्वम् । आधेयत्वस्य ति प्रत्ययार्थ आश्रयता सम्बन्धेन उष्णपर्श शब्दार्थ उष्णस्पर्शेऽन्वयः । तथा च यत्किंचिद्वस्तुनिष्ठ अधिकरणता निरूपित आधेयत्वाश्रयः उष्णस्पर्शः । इति विग्रहवाक्य जन्यशाब्दबोधः । समासवाक्यात्तु उष्णस्पर्शनिष्ठ आधेयता निरूपित अधिकरणतावत् तस्य अभेदसम्वन्धेन तेजसि अन्वयः । तथा च उष्णस्पर्शनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्नं तेजः ।

इदं खलु लक्षणवाक्यम् । अनेन वाक्येन तेजसः लक्षणमुच्यते । उष्णस्पर्शवत्वं तेजसः लक्षणम् । अत्र तेजो लक्ष्यं । लक्ष्यतावच्छेदकं तेजस्त्वम् । लक्ष्यतावच्छेदकावच्छिन्नं तेजः । अत्र तेजसि उष्णस्पर्शवत्वं वर्तते । अतः लक्षणसमन्वयः ।

ननु उष्णस्पर्शवत्वं तेजसः लक्षणमित्युक्ते आद्यक्षणावच्छि तेजसि अव्याप्तिः । कुतः इति चेत् उत्पन्नं द्रव्यं क्षणमगुणं अक्रियाकं च तिष्ठति इति नियमात् तेजसि आद्यक्षणे उष्णस्पर्शाख्य गुणो नास्ति अतः अव्याप्तिः इति चेन्न । उष्णस्पर्शाधिकरणत्वं तेजसः लक्षणमिति वदामः । इदानीं तेजसि अव्याप्तिः । कथं इति चेत् तेजसि आद्यक्षणे उष्णस्पर्शाभावेऽपि द्वितीय क्षणावच्छेदेन उष्णस्पर्शस्य सत्वात् उष्णस्पर्शाधिकरणत्वं । अतः नाव्याप्तिः ।

एवं सति उत्पन्नविनष्ट तेजसि अव्याप्तिः । कुतः इति चेत् पूर्वोक्तनियमात् तेजसि आद्यक्षणे उष्णस्पर्शाख्य गुणो नास्ति द्वितीयक्षणे तेजो नष्टः । अतः अव्याप्तिः इति चेन्न । जातिघटित लक्षणं कुर्मः । उष्णस्पर्शसमानाधिकरणा या जातिः तादृश जातिमत्वं तेजसः लक्षणम् । जातौ उष्णस्पर्शसमानाधिकरणत्वं च उष्णस्पर्शाधिकरणवृत्तित्वं अर्थः । अथवा उष्णस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ अधिकरणता निरूपित आधेयता अर्थः । तादृशजातिमत्वं तेजसः लक्षणम् । इदानीं नाव्याप्तिः । कथमिति चेत् तेजसि उष्णस्पर्शः वर्तते । अतः तेजो अधिकरणम् । अधिकरणता तेजोनिष्ठा । उष्णस्पर्शः आधेयः ।

आधेयता उष्णस्पर्शनिष्ठा। तयोः निरूपितत्वं सम्बन्धः। तथा च उष्णस्पर्शनिष्ठ आधेयता निरूपित अधिकरणतावत् तेजः। तद्वृत्तिः या जातिः तेजस्त्वरूपाजातिः। तादृशजातिमत्वं उत्पन्नविनष्ट तेजसि अस्ति इति नाव्याप्तिः।

एवमपि पृथिव्यां अतिव्याप्तिः। कुतः इति चेत् पृथिव्यां कालिक सम्बन्धेन उष्णस्पर्शस्प सत्वात्, कालिकसम्बन्धावच्छिन्न उष्ण स्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावती पृथिवी। तद्वृत्तिः या जातिः पृथिवीत्वरूपा जातिः। तादृशजातिमत्वं पृथिव्यां अस्तीति अतिव्याप्तिः इति चेन्न उष्णस्पर्शनिष्ठायां आधेयतायां समवायसंबंधावच्छिन्नत्वं निवेशनीयम्। अतः समवायसंबावच्छिन्न उष्णस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावद्वृत्तिः या जातिः तादृशजातिमत्वं तेजसः लक्षणम्। इदानीं नातिव्याप्तिः। कथमिति चेत् पृथिव्यां कालिक संबंधेन उष्णस्पर्शस्य सत्वेऽपि समवायसंबंधेन अभावात्। अतः समवायसंबंधावच्छिन्न उस्णस्पर्शनिष्ठ आधेयतानिरूपित अशिकरणतावती न पृथिवी किन्तु तेज एव। तद्वृत्तिः या जातिः तेजस्त्वरूपा जातिः। तादृशजातिमत्वं पृथिव्यां नास्तीति नातिव्याप्तिः।

एवमपि पुनः पृथिव्यां अतिव्याप्तिः। कुतः इति चेत् पृथिव्यां उष्णस्पर्शस्प उष्जस्पर्शत्वेनरूपेण असत्वेऽपि गुणत्वेन रूपेण सत्वात्। अतः समवायसंबंधावच्छिन्न गुणत्वावच्छिन्न उष्णस्पर्शनिष्ठ आधेया निरूपित अधिकरणतावती पृथिवी तद्वृत्तिः या जातिः पृथिवीत्वरूपा जातिः। तादृशजातिमत्वं पृमिव्यां अस्तीति अतिव्याप्तिः इति चेन्न। उष्णस्पर्शनिष्ठायां आधेयतायां उष्णस्पर्शत्वावच्छिन्नत्वं निवेशनीयम्। अतः समवायसंबंधावच्छिन्न उष्णस्पर्शत्वावच्छिन्न उष्णस्पर्शनिष्ठ आधयतानिरूपित अधिकरणतावद्वृत्तिः या जातिः तादृशजातिमत्वं तेजसः लक्षणं इत्युक्तं भवति। इदानीं नातिव्याप्तिः। कथमिति चेत् उष्ण पर्स्शस्य पृथिव्यां गुणत्वेन रूपेण सत्वेऽपिउष्णस्पर्शत्वेन रूपेण असत्वात्। अतः समवायसंबंवधाच्छिन्न उष्णस्पर्शत्वावच्छिन्न उष्णस्पर्शनिष्ठ आधे-

यतानिरूपित अधिकरणताक्ती न पृथिवी किन्तु तेज एव। तद्वृत्तिः या जतिः तेजस्त्वरूपा जातिः तादृशजातिमत्वं पृथिव्यां नास्तीति नाति व्याप्तिः।

एवमपि पुनः द्रव्यत्वजातिमादाय पृथिव्यां अतिव्याप्तिः। कथं इति चेत् समवायसंबंधावच्छिन्न उष्णस्पर्शत्वावच्छिन्न उष्णस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावत् तेजः। तद्वृत्तिः या जातिः द्रव्यत्व रूपा जातिः। तादृशजातिमत्वं पृथिव्यां अस्तीति अतिव्याप्तिः। तत्र जातौ द्रव्यत्वव्याप्यत्वस्य निवेशनेन पृथिव्यां नातिव्याप्तिः:। कथं इति चेत् द्रव्यत्वजातेः उष्णस्पर्शसमानाधिकरण्येऽपि द्रव्यत्वव्याप्यत्वा भावात् न द्रव्यत्वजातिः गृहीतुं शक्या। किन्तु तेजस्त्वरूपा जातिरेव। तादृशजातिमत्वं पृथिव्यां नास्तीति नातिव्याप्तिः।

इदानीं पुनः द्रव्यत्वजातिमादाय पृथिव्यां अतिव्याप्तिः। कुतः इति चेत् द्रव्यत्वव्याप्यत्वं नाम द्रव्यत्वाभाववदवृत्तित्वं अर्थः। द्रव्यत्वा भाववन् गुणादिः तत्र द्रव्यत्वं नास्ति। अतः अवृत्तित्वं द्रव्यत्वे वर्तते। अतः अतिव्याप्तिः इति चेन्न। द्रव्यत्वव्याप्यत्वं नाम द्रव्यत्वाभाववद वृत्तित्वं इति नार्थः। किन्तु द्रव्यत्वसमानाधिकरण भेदप्रतियोगिताव-च्छेदकत्वे सति द्रव्यत्वसामानाधिकरण्यम्। इदानीं पृथिव्यां नाति व्याप्तिः। कथमिति चेत् द्रव्यत्वजातेः द्रव्यत्वव्याप्यत्वं नास्ति कुतः इति चेत् द्रव्यत्वाधिकरणं जलादिकं तद्वृत्तिः यो भेदः गुणादि भेदः। न तु द्रव्यभेदः। भेदप्रतियोगी गुणादिः। प्रतियोगितावच्छेदिकं गुणात्वादिकं न तु द्रव्यत्वम्। अतः द्रव्यत्वजातेः द्रव्यत्वव्याप्यत्वं नास्ति। द्रव्यत्वव्या-प्यत्वं पृथिवीत्वादि रूपजातेरेव संभवति। कथमिति चेत् द्रव्यत्वाधि करणं पृथिव्यादिकम्। तद्वृत्तिः यो भेदः तेजोभेदः। भेदप्रतियोगि तेजः। प्रतियोगितावच्छेदकं तेजस्त्वं द्रव्यत्वसामानाधिकरण्यमपि तेजसि वर्तते। कथमिति चेत् द्रव्यत्वाधिकरणं तेजः। तत्र तेजस्त्वं वर्तते। अतः तद्वृत्तिः या जातिः तेजस्त्वरूपा जातिः। तादृशजातिमत्वं पृथिव्यां नास्तीति नातिव्याप्तिः। अतः समवायसंबंधावच्छिन्न उष्ण स्पर्शत्वावच्छिन्न उष्णस्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतागन्निष्ठ

अधिकरणता निरूपित आधेयतावती द्रव्यत्वसमानाधिकरण भेदप्रति योगितावच्छेदिका ता जातिः समवायेन तादृश जातिमत्वं तेजसः लक्षणं इति फलितं भवति।

अथ तेजो विभजते तदित।

**तत् द्विविधं। नित्यं अनित्यं चेति।**

द्वे विधे यस्य तत् द्विविधम्। द्वि शब्दस्य द्वित्वसंख्यापर्याप्त्यधिकरणो अर्थः। विधा शब्दस्य विभाजक धर्मौ अर्थः। द्वित्वसंख्यापर्याप्त्यधिकरणयोः अभेदसंबंधेन विभाजकधर्मयोरन्वयः। तथा च द्वित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मौ। यस्य इत्यत्र यच्छब्दस्य यत्पदार्थो अर्थः। तस्य निरूपितत्व संबंधेन षष्ठचर्थ आधेयतायां अन्वयः। तथा च यन्निपित आधेयत्वम्। तस्य आश्रयतासंबंधेन विभाजकधर्मयोरन्वयः। तथा च द्वित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मौ यन्निपित आधेयत्वाश्रयौ। इति विग्रहवाख्यात् शाब्दबोधः। समासवाक्यात् तु द्वित्वसंख्यापर्याप्यधिकरण विभाजक धर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावत्। अधिकरणतावतः अभेदसंबंधेन तेजसि अन्वयः। नित्यपदस्य लक्षणया नित्यतेजस्त्वमर्थः। अनित्य पदस्य लक्षणया अनित्यतेजस्त्वमर्थः। तस्य अभेदसंबंधेन विभाजक धर्मान्यतरस्मिन्नन्वयः। नित्यतेजस्त्वाभिन्न अनित्यतेजस्त्वाभिन्न द्वित्व संख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतरनिष्ठ आधेयता निरूपित अधि करणतावदभिन्नं तेजः।

पुनः तेजो विभजते।

**पुनस्त्रिविधम्। शरीरेंद्रियविषयभेदात्।**

शरीरं च इंद्रियं च विषयश्च शरीरेंद्रियविषयाः। तेषां भेदः शरीरेंद्रियविषयभेदः। तस्मात् शरीरेंद्रियविषयभेदात्। विषयाणा मित्यत्र षष्ठ्याः आधेयत्वमर्थः। शरीरेंद्रियविषयाणां निरूपितत्व संबंधेन षष्ठचर्थ आधेयत्वेऽन्वयः। तथा च शरीरेंद्रियविषय निरूपित आधेयत्वम्। तस्य आश्रयता संबंधेन भेद शब्दार्थ असाधारण धर्म

ष्वन्वयः। तथा च शरीरेंद्रियविषयनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रय असाधारण धर्माः। तिस्रः विधाः यस्य तत् त्रिविधम्। तिस्र पदस्य त्रित्वसंख्यापर्याप्त्यधिकरणं अर्थः। विधा शब्दस्य विभाजकधर्मान्यतमवन्तः अर्थः। त्रित्वसंख्यापर्याप्त्यधिकरणानां अभेदसंबंधेन विभाजकधर्मेष्वन्वयः। तथा च त्रित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतमवन्तः। यस्य इत्यत्र षष्ठ्याः आधेयत्वमर्थः। यत् पदार्थस्य निरूपितत्वसंबंधेन आधेयत्वे अन्वयः। आधेयत्वस्य आश्रयतासंबंधेन विभाजकधर्मेष्वन्वयः। तथा च त्रित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतमवन्तः यन्निरूपित आधेयत्वाश्रयाः इति विग्रहवाक्यात् शाब्द बोधः। समासवाक्यात् तु त्रित्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमनिष्ठ आधेयता निरूपित अधिकरणतावत्। अधिकरणतावतः अभेदसम्बन्धेन तेजसि अन्वयः। तथा च अधिकरणतावदभिन्नं तेजः।

शरीरेंद्रिय विषयनिरूपित आधेयत्वाश्रय असाधारण धर्माणां पञ्चम्यर्थं अभेदसम्बन्धेन विभाजक धर्मेषु अन्वयः। पुनः शब्दस्य पूर्वोक्त विभाजकधर्माभिन्नः अर्थः। तस्य अभेदसम्बन्धेन विभाजक धर्मान्यततमेष्वन्वयः। तथा च पूर्वोक्त विभाजकधर्माभि त्रित्वसंख्या पर्याप्त्यधिकरण विभाजकधर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरण तावदभिन्नं तेजः।

अथ शरीरं निरूपयति शरीरमिति।

## शरीरं आदित्यलोके।

आदित्यस्य लोकः आदित्यलोकः। तस्मिन् आदित्यलोके। आदित्यस्य इत्यत्र षष्ठ्याः नियम्यत्वं अर्थः। स्वनिष्ठ नियामकता निरूपितत्वसम्बन्धेन षष्ठ्यर्थ नियम्यत्वेऽन्वयः। नियम्यतायाः आश्रयता सम्बन्धेन लोक शब्दार्थ लोकेऽन्वयः। लोकस्य निरूपितत्वसम्बन्धेन एकदेश आधेयतायां अन्वयः। आधेयतावतः अभेदसम्बन्धेन शरीरे अन्वयः। तथा च आदित्यनिष्ठ नियामकतानिरूपित नियम्यत्वाश्रय लोक निरूपित आधेयतावदभिन्नं शरीरम्।

इंद्रियं निरूपयति ।

**इंद्रियं रूपग्राहकम् चक्षुः ।**

रूपस्य ग्राहकं रूपग्राहकं इति विग्रहः । रूपस्य इत्यत्र षष्ठचाः विषयता अर्थः । रूपस्य आधेयता संबंधेन विषयतायां अन्वयः । तथा च रूपनिष्ठ विषयता । विषयतायाः निरूपकत्वसंबंधेन ग्रह धात्वर्थ ज्ञानेऽन्वयः । ज्ञानस्य निरूपितत्वसंबंधेन ण्वुल् प्रत्ययार्थ जनकतावानित्येकदेश जनकतायां अन्वयः । जनकतावतः अभेदसंबंधेन इंद्रिये अन्वयः । इंद्रियस्य अभेदसंबंधेन चक्षुपि अन्वयः । तथा च रूपनिष्ठ विषयता निरूपक ज्ञाननिष्ठ जन्यता निरूपित जनकतावदभिन्नं इंद्रियाभिन्नं चक्षुः ।

**तच्च कृष्णताराग्रवर्ती ।**

कृष्णतारायाः अग्रं कृष्णताराग्रं । अग्रे वर्तते इति कृष्णतारा–ग्रवर्ति । कृष्णताराग्रे इत्यत्र सप्तम्याः अधिकरणत्वमर्थः । कृष्ण ताराग्रस्य आधेयता संबंधेन सप्तम्यर्थ अधिकरणतायां अन्वयः । तथा च कृष्णताराग्रनिष्ठ अधिकरणता । वर्तते इत्यत्र वृत धातोः आधेयत्वमर्थः । अधिकरणतायाः निरूपितत्वसंबन्धेन आधेयत्वेऽन्वयः । आधेयत्वस्य आख्यात प्रत्ययार्थ आश्रयतासंबंधेन तच्छब्दार्थ चक्षुरिंद्रिये अन्वयः । तथा च कृष्णताराग्रनिष्ठ अधिकरणतानिरूपि आधेयत्वाश्रयः चक्षुरिंद्रियम् ।

अथ विपयं निरूपयति ।

**विषयश्चतुर्विधः । भौमदिव्यौदर्याकरजभेदात् ।**

चतस्रः विधाः यस्य सः । चतस्र शब्दस्य चतुष्ठ्वसंख्या-पर्याप्त्यधिकरणमर्थः । विधा शब्दस्य विभाजकधर्मान्यितमवन्तः अर्थः । चतुष्ट्त्व संख्यापर्याप्त्यधिकरणानां अभेदसंबंधेन विभाजक धर्मेषु अन्वयः । यस्य इत्यत्र षष्टचाः आधेयत्वमर्थः । यत्पदार्थस्य निरूपितत्वसंवन्धेन आधेयत्वेऽवयः । आधेयत्वस्य आश्रयतासंबन्धेन विभाजकधर्मेष्वन्वयः । तथा च यन्निरूपित आधेयत्वाश्रयाः चतुष्ट्त्व संख्यापर्याप्त्यधिकरण विभाजक धर्मान्यितमवन्तः । इति विग्रहवाक्यात्

शाब्दबोधः । समासवाक्यात् तु चतुष्ट्व संख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतमनिष्ठ आधेयता निरूपित अधिकरणतावान् । तस्य अभेद सम्बन्धेन विषयेऽन्वयः । तथा च अधिकरणतावदभिन्नः विषयः । भूमौ भवं भौमं । दिवि भवं दिव्यं । उदरे भवं औदर्यं । आकरात् जायते इति आकरजम् । भौमं च दिव्यं च औदर्यं च आकरजं च भौमदिव्यौदर्याकरजानि । तेषां भेदः । आकजभेदः । तस्मात् आकरजभेदात् । आकरजानां इत्यत्र षष्ठ्याः आधेयत्वमर्थः । भौमस्य निरूपितत्व सम्बन्धेन षष्ठ्यर्थ आधेयत्वेऽन्वयः । औदर्यस्य निरूपितत्व सम्बन्धेन षष्ठ्यर्थ आधेयत्वेऽन्वयः । आकरजस्य निरूपितत्व सम्बन्धेन षष्ठ्यर्थ आधेयत्वेऽन्वयः । तथा च भौमनिष्ठ अधिकरणता निरूपित आधेयत्वं । औदर्यनिष्ठ अधिकरणतानिरूपित आधेयत्वं । आकरजनिष्ठ अधिकरणता निरूपित आधेयत्वं ।

भेदशब्दस्य असाधारणधर्माः अर्थः ।

भौमनिरूपित आधेयत्वस्य आश्रयतासंबंधेन असाधारणधर्मेष्वन्वयः । दिव्यनिरूपित आधेयत्वस्य आश्रयतासंबधेन असाधारण धर्मेष्वन्वयः । औदर्यनिरूपित आधेयत्वस्य आश्रयता संबंधेन असाधारण धर्मेष्वन्वयः । आकरज निरूपित आधेयत्वस्य आश्रयता सम्बन्धेन असाधारण धर्मेष्वन्वयः ।

असाधारण धर्माणां पञ्चम्यर्थ अभेद सम्बन्धेन विभाजकधर्मेष्वन्वयः ।

तथा च भौमनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रय असाधारणधर्माभिन्न, दिव्यनिष्ठ अधिकरणता निरूपित आधेयत्वाश्रय असाधारण धर्माभिन्न औदर्यनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रय असाधारणधर्माभिन्न, आकरजनिष्ठ अधिकरणता निरूपित आधेयत्वाश्रय असाधारणधर्माभिन्न चतुष्ट्व संख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नः विषयः ।

अथ भौमतेजो निरूपयति ।

## भौमं वन्ह्यादि ।

वन्हिः आदिः यस्य तत् । यस्य इत्यत्र यच्छब्दस्य समुदायोऽर्थः । समुदायस्य आधेयतासंबंधेन षष्ठचर्थ घटिततायां अन्वयः । घटितताया: निरूपितत्वसंबंधेन आदि शब्दार्थ घटकतावदित्येकदेश घटकतायां अन्वयः । घटकतावतः अभेदसंबंधेन वन्हौ अन्वयः । तथा च समुदायनिष्ठ घटिततानिरूपित घटकतावदभिन्नः वन्हिः । इति विग्रहवाक्यात् शाब्दबोधः । समासवाक्यात् तु वन्हिनिष्ठ घटकतानिरूपित घटितता-वदभिन्नः समुदायः । भौम शब्दस्य भौमतेजस् अर्थः । समुदायस्य अभेदसंबंधेन भौमतेजसि अन्वयः । तथा च वन्हिनिष्ठ घटकतानिरूपित घटिततावदभिन्न, समुदायभिन्नः विषयः भौमतेजोऽभिन्नः ।

अथ दिव्यतेजोनिरूपयति ।

## दिव्यमबिन्धनं विद्युदादि

आपः इन्धनानि यस्य तत् अबिन्धनम् । विद्युत् आदि यस्य तत् विद्युदादि । यस्य इत्यत्र यच्छब्दस्य समुदायोऽर्थः । समुदायस्य आधेयतासंबंधेन षष्ठचर्थ घटिततायामन्वयः । घटितताया: निरूपितत्व संबंधेन आदि शब्दार्थ एकदेश घटकतायां अन्वयः । घटकतावतः अभेदसंबंधेन विद्युदि अन्वयः । तथा च समुदायनिष्ठ घटिततानिरूपित घटकतावदभिन्ना विद्युत् । इति विग्रहवाक्यात् शाब्दबोधः । समास वाक्यात् विद्युन्निष्ठ घटकतानिरूपित घटिततावदभिन्नः समुदायः । समुदायस्य अभेदसंबंधेन दिव्य शब्दार्थ दिव्यतेजसि अन्वयः । विषय स्यापि अभेदसंबंधेन दिव्यतेजसि अन्वयः । तथा च विद्युन्निष्ठ घटकतानिरूपित घटिततावदभिन्नं दिव्यतेजः विषयाभिन्नं ।

अथ औदर्यतेजो निरूपयति ।

## भुक्तस्य परिणाहेतुरौदर्यम्

परिणामस्य हेतुः परिणामहेतुः । परिणामस्य इत्यत्र षष्ठचाः कार्यताऽर्थः । परिणामस्य आधेयतासंबन्धेन षष्ठचर्थ कार्यतायामन्वयः । कार्यताया: निरुपितत्वसंबंधेन हेतु शब्दार्थ कारणतावदित्येकदेश

कारणतायाँ अन्वयः । भुक्तस्य इत्यत्र भुज धातोः भोजनमर्थः । तस्य निरूपितत्वसम्बन्धेन क्त प्रत्ययार्थं कर्मतावदभिन्नमित्येकदेश कर्मताया मन्वयः । कर्मतावदभिन्नस्य स्वनिष्ठ प्रतियोगिता निरूपितत्वसम्बन्धेन षष्ठ्यर्थ सम्बन्धेऽन्वयः । सम्बन्धस्य आश्रयता सम्बन्धेन परिणामे अन्वयः । तथा च भोजननिरूपित कर्मतावदभिन्ननिष्ठ प्रतियोगिता निरूपक सम्बन्धाश्रय परिणामनिष्ठ कार्यतानिरूपित कारणतावत् ।

उदरे भवं औदर्यम् । उदरे इत्यत्र सप्तम्याः अधिकरणत्वमर्थः । उदरस्य आधेयतासम्बन्धेन अधिकरणतायामन्वयः । अधिकरणतायाः निरूपितत्वसम्बन्धेन भू धात्वर्थ आधेयत्वेऽन्वयः । आधेयत्वस्य आख्यात प्रत्ययार्थ आश्रयता सम्बन्धेन तेजसि अन्वयः ।

कार्यतानिरूपित कारणतावतः अभेदसम्बन्धेन तेजसि अन्वयः । विषयस्यापि अभेदसम्बन्धेन औदर्यतेजसि अन्वयः ।

तथा च भोजननिरूपित कर्मतावदभिन्न सम्बन्धि परिणाम निष्ठ कार्यतानिरूपित कारणतावदभिन्नं उदरनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयतेजः विषयाभिन्नम् ।

अथ आकरजतेजो निरूपयति ।

## आकरजं सुवर्णादि

आकरात् जायते इति आकरजम् । सुवर्णं आदि यस्य तत् । यस्य इत्यत्र यच्छब्दस्य समुदायोऽर्थः । समुदायस्य आधेयतासम्बन्धेन षष्ठ्यर्थ घटिततायामन्वयः । घटिततायाः निरूपितत्व सम्बन्धेन आदि शब्दार्थ एकदेश घटकतायामन्वयः । घटकतावतः अभेदसम्बन्धेन सुवर्णेऽन्वयः । तथा च समुदायनिष्ठ घटिततानिरूपित घटकतावदभिन्नं सुवर्णं इति विग्रहवाक्यजन्यबोध ।

समासवाक्यात्तु सुवर्णनिष्ठ घटकतानिरूपित घटिततावदभिन्नः समुदायः ।

आकरात् इत्यत्र पञ्चम्याः जनकत्वमर्थः । आकरस्य आधेयता सम्बन्धेन जनकतायामन्वयः । जायते इत्यत्र जनि धातोः जन्यत्वमर्थः ।

जनकतायाः निरूपितत्वसम्बन्धेन जन्यतावदित्येकदेश जन्यतायामन्वयः। जन्यतायाः आख्यातप्रत्ययार्थ आश्रयतासम्बन्धेन आकरज तेजसि अन्वयः। समुदायस्य अभेदसम्बन्धेन आकरज तेजसि अन्वयः। विषयस्यापि अभेदसम्बन्धेन आकरज तेजसि अन्वयः। तथा च आकरनिष्ठ जनकता निरूपित जन्यत्वाश्रय, सुवर्णनिष्ठ घटकतानिरूपित घटितता-वदभिन्नं समुदायाभिन्नं तेजः विषयाभिन्नम्।

# अथ वायुनिरूपणम्

अथ वायुं निरूपयति रूपरहितेति।

**रूपरहितस्पर्शवान् वायुः।**

रूपेण रहितः रूपरहितः। स्पर्शः अस्मिन् अस्तीति स्पर्शवान् रूपरहितश्चासौ स्पर्शवांश्च रूपरहितस्पर्शवान्। इति विग्रहः।

अस्मिन् इत्यत्र इदं शब्दस्य यत्किञ्चिद्वस्तु अर्थः। सप्तम्याः अधिकरणत्वमर्थः। यत्किञ्चिद्वस्तुनः आधेयतासम्बन्धेन अधिकरणताया मन्वयः। यत्किचिद्वस्तुनिष्ठ अधिकरणता। अस्ति इत्यत्र अस् धातोः आधेयत्वं अर्थः। अधिकरणतायाः निरूपितत्वसम्बन्धेन आधेयत्वे अन्वयः। आधेयत्वस्य 'ति' प्रत्ययार्थ आश्रयतासम्बन्धेन स्पर्श शब्दार्थ स्पर्शे अन्वयः। तथा च यत्किञ्चिद्वस्तुनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयः स्पर्शः। इति विग्रहवाक्यजन्यशाब्दबोधः। समास वाक्यात्तु स्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावान्। तस्य अभेद सम्बन्धेन वायावन्वयः। तथा च स्पर्शनिष्ठ आधेयतानिरूपित अधि करणतावदभिन्नः वायुः।

रूपेण इत्यत्र रूपशब्दस्य रूपं अर्थः। रूपस्य आधेयतासंबंधेन तृतीयार्थ प्रतियोगितायामन्वयः। रूपनिष्ठ प्रतियोगिता। प्रतियोगि तायाः निरूपकत्वसम्बन्धेन रहित शब्दार्थ अभाववान् इत्येकदेश अभा वेऽन्वयः। तथा च रूपनिष्ठ प्रतियोवितानिरूपक अभाववान्। तस्य अभेदसम्बन्धेन वायौ अन्वयः।

तथा च रूपनिष्ठ प्रनियोगितानिरूपक अभाववदभिन्न वायुः स्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नः इति शाब्दबोध प्रकारः ।

इदं खलु लक्षणवाक्ययं अनेन वाक्येन वायोः लक्षणं उच्यते । रूपरहितत्वे सति स्पर्शवत्वं बायोर्लक्षणम् ।

यस्य लक्षणमुच्यते तल्लक्ष्यं इति नियमात् अत्र वायोः लक्षण मुच्यते । अतः वायुः लक्ष्यः । लक्ष्यतावच्छेदकं वायुत्वं लक्ष्यतावच्छेद कावच्छिन्नं वायुः । अत्र वायौ उक्तलक्षणं वर्तते । तत्कथमिति चेत् वायौ रूपं नास्ति अतः वायुः रूपरहितः । रूपरहितत्वं वायौ अस्ति । किञ्च वायौ स्पर्शः अस्ति । अतः स्पर्शवत्वमपि वायौ वर्तते इति लक्षणसमन्वयः ।

रूपरहितत्वे सति स्पर्शवत्वं वायोः लक्षणम् । अत्र लक्षणे विशेष्यानुपादाने (रूपरहितत्वं वायोः लक्षणं इत्येवोक्तौ) आकाशादौ अतिव्याप्तिः । आकाशादीनां रूपाभावात् । अतः स्पर्शवत्वाख्यदलं देयम् । आकाशादिषु स्पर्शाभावात् स्पर्शवत्वं नास्तीति नातिव्याप्तिः ।

विशेषणानुपादाने (स्पर्शवत्वं वायोर्लक्षणं इत्येवोक्तौ) पृथिव्या मतिव्याप्तिः । पृथिव्यां स्पर्शस्य सद्भावात् स्पर्शवत्वं पृथिव्यां अस्ति इति अतिव्याप्तिः । अतः सत्यन्तं देयम् । पृथिव्यां रूपस्य सद्भा-वात् रूपरहितत्वं नास्तीति नातिव्याप्तिः ।

तथा च रूपनिष्ठप्रतियोगितानिरूपक अभावनिष्ठ अधेयतानिरूपित अधिकरणत्वे सति स्पर्शनिष्ठ आधेयतानिरूपित अधिकरणत्वं वायोः लक्षणं इत्युक्तं भवति ।

इदानीं पृथिव्यां अतिव्याप्तिः । पृथिव्यां रूपस्य समवायसंबंधेन सत्वेऽपि संयोगसंबंधेन अभावात् संयोगसंबंधावच्छिन्न रूपनिष्ठप्रति–योगितानिरूपक अभावः पृथिव्यां वर्तते । अभावाधिकरणत्वं अपि तत्र वर्तते इति अतिव्याप्तिः । इति चेत् रूपनिष्ठायां प्रतियोगितायां समवायसंबंधावच्छिन्नत्वं निवेशनीयम् । इदानीं पृथिव्यां नातिव्याप्तिः

कथमिति चेत् रूपस्य पृथिव्यां समवायसंबंधेन सत्वात् समवायसंबंधावच्छिन्न रूपनिष्ठप्रतियोगितानिरूपक अभावः पृथिव्यां नास्तीति नाति व्याप्तिः ।

पुनः पीतघटे (पृथिव्यां) अतिव्याप्तिः । कथमिति चेत् सम वायसम्बन्धावच्छिन्न नीलरूपत्वावच्छिन्न रूपनिष्ठप्रतियोगितानिरूपक अभावः पीतघटे अस्ति । अभावाधिकरणत्वं वर्तते स्पर्शाधिकरणत्व मपि वर्तते इति अतिव्याप्तिः । अतः रूपनिष्ठायां प्रतियोगितायां रूपत्वावच्छिन्नं निवेशनीयम् । इदानीं पीतघटे नीलरूपाभावेऽपि पीतरूपस्य सत्वात् समवायसम्बन्धावच्छिन्न रूपत्वावच्छिन्न रूपनिष्ठ प्रतियोगितानिरूपक अभावः पीतघटे नास्ति । अभावाधिकरणत्वमपि नास्तीति नातिव्याप्तिः ।

तथा च समवायसम्बन्धावच्छिन्न रूपत्वावच्छिन्न रूपनिष्ठप्रति– योगितानिरूपक अभावनिष्ठ आधेयतानिरूपित अधिकरणत्वे सति स्पर्श निष्ठ आधेयतानिरूपित अधिकरणत्वं वायोः लक्षणं इति फलितम् ।

एवमुक्ते काले अतिव्याप्तिः । कुतः इति चेत् काले कालिक सम्बन्धेन स्पर्शः अस्ति । रूपरहितत्वं अपि काले वर्तते । अतः कालिक सम्बन्धावच्छिन्न स्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावान् कालः । अतः अधिकरणत्वं काले अस्तीति अतिव्याप्तिः । इति चेत् स्पर्शनिष्ठायां आधेयतायां समवायसम्बन्धावच्छिन्नत्वस्य निवेशनेन काले नातिव्याप्तिः । कथमिति चेत् काले कालिकसम्बन्धेन स्पर्शस्य सत्वेऽपि समवायसम्बन्धेन नास्ति । अतः समवायसम्बन्धावच्छिन्न स्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावान् न कालः । किन्तु वायुरेव । अतः अधिकरणत्वं काले नास्तीति नातिव्याप्तिः ।

इदानीं काले पुनः अतिव्याप्तिः । कुतः इति चेत् काले स्पर्शस्य गुणत्वेन रूपेण सद्भावात् समवायसम्बन्धावच्छिन्न गुणत्वावच्छिन्न स्पर्शनिष्ठ आधेयतानिरूपित अधिकरणत्वं काले अस्तीति अतिव्याप्तिः इति न वाच्यम् । स्पर्शनिष्ठायां आधेयतायां स्पर्शत्वावच्छिन्नत्वं

निवेशनीयम् । इदानीं काले नातिव्याप्तिः कुतः इति चेत् काले स्पर्शस्य गुणत्वेन रूपेण सत्वेऽपि स्पर्शत्वेन रूपेण असत्वात् । अतः समवायसम्बन्धावच्छिन्न गुणत्व स्पर्शत्वादच्छिन्न स्पर्शनिष्ठ आधेयता निरूपित अधिकरणतावान् न कालः किन्तु वायुरेव । अतः नाति व्याप्तिः ।

अतः समवायसम्बन्धावच्छिन्न रूपत्वाच्छिन्न रूपनिष्ठप्रतियोगिता निरूपक अभावनिष्ठ आधेयतानिरूपित अधिकरणत्वे सति समवाय सम्बन्धावच्छिन्न स्पर्शत्वावच्छित्र स्पर्शनिष्ठ आधेयतानिरूपित अधि–करणत्वं वायोर्लक्षणम् ।

एवमुक्ते उत्पन्नविनष्टवायौ अव्याप्तिः । उत्पन्नं द्रव्यं क्षणमगुणं अक्रियाकं च तिष्ठति इति नियमात् वायौ आद्यक्षणे रूपं नास्ति अतः रूपरहितत्वं वायौ अस्ति । वायौ आद्यक्षणे स्पर्शो नास्ति । द्वितीय क्षणे वायुः नष्टः अतः उत्पन्नविनष्टवायौ अव्याप्तिः इति चेत् जाति घटितलक्षणं कुर्मः । रूपाभावसमानाधिकरणा स्पर्शसमानाधिकरणा या जातिः तादृशजातिमत्वं वायोः लक्षणम् । इदानीं नाव्याप्तिः । रूपाभाव समानाधिकरणा स्पर्शसमानाधिकरणा या जातिः वायुत्वरूपा जातिः । तादृश जातिमत्वं उत्पन्नविनष्टवायौ अस्तीति नाव्याप्तिः ।

एवमपि पृथिव्यां अतिव्याप्तिः । कुतः इति चेत् रूपनिष्ठ–प्रतियोगितानिरूपक अभाव समानाधिकरणा स्पर्शसमानाधिकरणा या जातिः द्रव्यत्वरूपा जातिः । तादृशजातेः पृथिव्यामपि सत्वात् अति व्याप्तिः । अतः जातौ द्रव्यत्वव्याप्यत्वं निवेशनीयम् । रूपाभाव समानाधिकरणा स्पर्शसमानाधिकरणा द्रव्यत्वव्याप्या या जातिः तादृश जातिमत्वं वायोर्लक्षणं इत्युक्तं भवति द्रव्यत्वजातेः द्रव्यत्वव्याप्यत्वं नास्तीति द्रव्यत्वव्याप्या या जातिः इत्युक्तौ न द्रव्यत्वरूपा जातिः किन्तु वायुत्वरूपाजातिः तादृशजातिमत्वं वायौ वर्तते अन्यत्र नास्तीति नातिव्याप्तिः ।

द्रव्यत्वव्याप्या या जातिः तादृशजातिमत्वं वायोर्लक्षणं इत्येवोक्तौ पृथिव्यामतिव्याप्तिः । कुतः इति चेत् द्रव्यत्वव्याप्या या जातिः पृथिवीत्वरूपा जातिः तादृशजातेः पृथिव्याँ सत्वात् पृथिव्यां अति-व्याप्तिः अतः पूर्वोक्तदलद्वयं निवेशनीयम् ।

तथा च समवायसंबंधावच्छिन्न रूपत्वावच्छिन्न रूपनिष्ठ प्रति योगितानिरूपक अभावसमानाधिकरणा समवायसंबंधावच्छिन्न स्पर्शत्वा वच्छिन्न स्पर्शनिष्ठ आधेयतानिरूपित अधिकरणतावद्वृत्तिः द्रव्यत्वव्याप्या या जातिः तादृशजातिमत्वं वायोर्लक्षणं इति निष्कृष्टलक्षणम् ।

अथ वायु विभजते ।

**सः द्विविधः नित्योऽनित्यश्चेति ।**

द्वे विधे यस्य सः द्विविधः इति विग्रहः । शाब्दबोधप्रकारस्तु पूर्ववत् बोध्यम् ।

नित्यवायुत्वाभिन्नअनित्यवायुत्वाभिन्न द्वित्वसंख्या पर्याप्त्यधिकरण विभाजक धर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्नः वायुः ।

पुनः वायुं विभजते ।

**पुनस्त्रिविध। शरीरेंद्रियविषयभेदात् ।**

पूर्वोक्त विभाजक धर्माभिन्न शरीरेंद्रिय विषयनिष्ठ अधिकरणता निरूपित आधेयत्वाश्रय असाधारण धर्माभिन्न त्रित्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नः वायुः ।

अथ क्रमप्राप्तं शरीरं निरूपयति ।

**शरीरं वायुलोके ।**

वायोः लोकः वायुलोकः । तस्मिन् वायुलोके । इति विग्रहः शाब्दबोधप्रकारस्तु पूर्ववद्बोध्यम् ।

वायुनिष्ठ नियामकतानिरूपित नियम्यत्वाश्रय लोकनिष्ठ अधि-करणतानिरूपित आधेयतावदभिन्नं शरीरम् ।

अथ इंद्रियं निरूपयति ।

**इंद्रियं स्पर्शग्राहकं त्वक् ।**

स्पर्शनिष्ठ विषयतानिरूपक ज्ञाननिष्ठ जन्यतानिरूपित जनकतावदभिन्नं इंद्रियं त्वगिंद्रियाभिन्नम् ।

त्वगिंद्रियस्य अधिकरणमाह ।

**सर्वशरीरवृत्तिः ।**

सर्वशरीरनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नत्वक् ।

अथ विषयं निरूपयति ।

**विषयो वृक्षादिकंपनहेतुः ।**

वृक्षः आदिः यस्य सः वृक्षादिः । तस्य कंपनं वृक्षादिकंपनम् । तस्य हेतुः वृक्षादिकंपनहेतुः । वृक्षनिष्ठ घटकतानिरूपित घटिततावद भिन्न समुदायनिष्ठ प्रतियोगितानिरूपक कंपननिष्ठ कार्यतानिरूपित कारणतावदभिन्नः वायुः ।

# अथ आकाशनिरूपणम्

अथ आकाशं लक्षयति ।

**शब्दगुणकमाकाशम् ।**

शब्दः गुणः यस्य तत् शब्दगुणकम् । यस्य इत्यत्र यच्छब्दस्य यत्किञ्चिद्वस्तु इत्यर्थः । यत्किञ्चिद्वस्तुनः स्वनिष्ठ अधिकरणता निरूपितत्वसंबंधेन षष्ठ्यर्थ आधेयत्वेऽन्वयः । आधेयत्वस्य आश्रयता संबंधेन गुणत्वेऽन्वयः । शब्दस्य अभेदसंबंधेन गुणत्वेऽन्वयः । तथा च यत्किञ्चिद्वस्तुनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयः गुणाभिन्नः शब्दः । इति विग्रहवाक्यात् शाब्दबोधः । समासवाक्यात् तु शब्दाभिन्नगुणनिष्ठ आधेयतानिरूपित अधिकरणतावत् । तस्य अभेदसंबंधेन आकाशेऽन्वयः । तथा च शब्दाभिन्न गुणनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नं आकाशम् ।

।। लक्षणसमन्वयः – शब्दाभिन्नगुणत्वं आकाशस्य लक्षणम् आकाशे शब्दाख्यगुणो वर्तते ।। अतः आकाशं अधिकरणम् । शब्दाख्य गुणः आधेयः । अधिकरणता आकाशनिष्ठा ।। आधेयता शब्दाभिन्न गुणनिष्ठा । तयोः निरूपितत्वं संबंधः ।

तथा च शब्दाभिन्न गुणनिष्ठ आधेयतानिरूपित अधिकरणत्वं आकाशे वर्तते इति लक्षणसमन्वयः ।

शब्दवत्वं आकाशस्य लक्षणमित्येवोक्तौ काले अतिव्याप्तिः । कालिकसंबंधेन शब्दस्य सत्वात् । अतः अतिव्याप्तिः इति न वाच्यम् । तद्वारणाय शब्दनिष्ठायां आधेयतायां समवायसंबंधावच्छिन्नत्वं देयम् । तथा च समवायसंबंधावच्छि शब्दाभिन्न गुणनिष्ठ आधेयता निणपित अधिकरणत्वं आकाशस्य लक्षणम् । इदानीं काले नातिव्याप्तिः । काले कालिकसंबंधेन शब्दस्य सत्वेऽपि समवायसंबंधेन असत्वात् ।

गुणत्वेन रूपेण शब्दस्य काले सत्वात् समवायसंबंधावच्छिन्न गुणत्वाच्छिन्न शब्दाभिन्नगुणनिष्ठ आधेयतानिरूपित अधिकरणत्वं काले अस्तीति अतिव्याप्तिः इति चेन्न । शब्दनिष्ठायां आधेयतायां शब्दत्वा वच्छिन्नत्वं निवेशनीयम् । काले शब्दस्य गुणत्वेन रूपेण सत्वेऽपि शब्दत्वेन रूपेण असत्वात् समवायसंबंधावच्छिन्न शब्दत्वावच्छिन्न शब्दा भिन्नगुणनिष्ठ आधेयतानिरूपित अधिकरणत्वं काले नास्तीति नाति व्याप्तिः । अतः समवायसंबंधावच्छिन्न शब्दत्वावच्छिन्न शब्दाभिन्न गुण निष्ठ आधेयतानिरूपित अधिकरणत्वं आकाशस्य लक्षणं इति फलितम् ।

एकत्वं नाम स्वसजातीयद्वितीयरहितत्वम् । विभुत्वं नाम सर्वमूर्तद्रव्यसंयोगित्वम् । नित्यत्वं नाम ध्वंसाप्रतियोगित्वम् । भूतत्वं नाम बहिरिंद्रियग्राह्यविशेषगुणवत्वम् । मूर्तत्वं नाम क्रियाश्रयत्वं । तच्च पृथिव्यादि चतुष्टये मनसि च वर्तते । (अ) भूतत्वं नाम बहिरिंद्रियग्राह्यविशेषगुणवत्वम् । बहिरिंद्रयाणि चक्षुरादीनि पञ्च । तैः ग्राह्याः ये पंचगुणाः रूपरसगंधस्पर्शशब्दाः । तदन्यतमवत्वं पृथिव्यादि पञ्चसु वर्तते ।

# अथ कालनिरूपणम्

अथ क्रमप्राप्तं कालं लक्षयति।

**अतीतादिव्यवहारहेतुः कालः ।**

अतीतः आदिः येषां ते अतीतादयः तेषां व्यवहारः। अतीतादि व्यवहारः। तस्य हेतुः व्यवहारहेतुः। येषां इत्यत्र यच्छब्दस्य समुदायोऽर्थः। तस्य आधेयतासंबंधेन षष्ठचर्थ घटिततायां अन्वयः। घटितताया: निरूपितत्व संबंधेन आदि शब्दार्थ एकदेश घटकतायामन्वयः। घटकतावतः अभेदसंबंधेन अतीते अन्वयः। तथा च समुदायनिष्ठ घटितानिरूपित घटकतावदभिन्नः अतीतः। इति विग्रहवाक्यात् शाब्दबोधः। समासवाक्यात्तु अतीतनिष्ठ घटकतानिरूपित घटितता-वदभिन्नः समुदायः। समुदायस्य आधेयतासंबंधेन षष्ठचर्थ विषयताया मन्वयः। तथा च समुदायनिष्ठविषयता। तस्याः निरूपकत्वसंबंधेन व्यवहारशब्दार्थ ज्ञानजनक शब्दप्रयोग इत्येकदेश ज्ञाने अन्वयः। ज्ञान जनकशब्दप्रयोगस्य आधेयतासंबंधेन षष्ठचर्थ कार्यतायां अन्वयः। कार्यतायाः निरूपितत्वसंबंधेन हेतुशब्दार्थ कारणतावान् इत्येकदेश कारणतायां अन्वयः। तथा च अतीतनिष्ठ घटकतानिरूपित घटिततावदभिन्न समुदायनिष्ठ विषयतानिरूपक ज्ञानजनक शब्दप्रयोगनिष्ठ कार्यता निरूपित कारणतावान्। तस्य अभेदसंबंधेन काले अन्वय। तथा च अतीतनिष्ठ················ ··कारणतावदभिन्नः कालः।

इदं खलु लक्षणवाक्यम्। अनेन वाक्येन कालस्य लक्षणमुच्यते। तत्किमिति चेत् अतीतादि व्यवहारनिष्ठ कार्यतानिरूपितकारणत्वं कालस्य लक्षणम्। अतीतादिव्यवहारनिष्ठ विषयतानिरूपको यो व्यवहारः अतीतकालवान् घटः इति व्यवहारः। व्यवहारे यः विषयः अतीत कालवान् विषयः। विषयता अतीतकालवन्निष्ठा। अतीतकालवन्निष्ठा विषयता किंनिरूपिता। व्यवहारनिरूपिता। इति व्यवहारः अतीतादिनिष्ठ विषयतानिरूपको भवति। कुतः इति चेत् या यन्निरूपिता सा तन्निरूपिका भवति। अतीतादिनिष्ठविषयता या यन्निरूपिता

व्यवहारनिरूपिता । सः व्यवहारः तन्निरूपको भवति । तन्नाम अतीतादि निष्ठ विषयतानिरूपकः यः व्यवहारः अतीतादिघटः भविष्यति घटः इत्याकारक व्यवहारः । तादृशव्यवहारं प्रति कारणं कालः । कुतः इति चेत् व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणत्वात् ।

व्यवहारे व्यवहर्तव्यः घटः । व्यवहर्तव्यता घटनिष्ठा । व्यवहर्तव्यतायामवच्छेदकं कालः । अतः कालः कारणम् । कारणता कालनिष्ठा । कार्यं व्यवहारः कार्यता व्यवहारनिष्ठा । व्यवहारनिष्ठ कार्यतायाः कालनिष्ठकारणतायाश्च निरूप्यनिरूपकभावसंबंधः ।

तथा च अतीतादिनिष्ठ विषयतानिरूपक ज्ञानजनकशब्द प्रयोग निष्ठ कार्यतानिरूपित कारणतावत्वं काले वर्तते इति लक्षणसमन्वयः ।

व्यवहारहेतुत्वं कालस्य लक्षणमित्येवोक्ते अयं घटः इति व्यवहारे हेतुभूतघटत्वे अतिव्याप्तिः । अतः अतीतादि इति विशेषणीयं देयम् । अतीतादि व्यवहारत्वं अयं घटः इति व्यवहारे नास्तीति नातिव्याप्तिः ।

# अथ दिङ्निरूपणम्

अथ क्रमप्राप्तं दिङ् निरूपयति । प्राच्यादि इति ।

**प्राच्यादिव्यवहारहेतुर्दिक् ।**

प्राच्यः आदि येषां ते प्राच्यादयः । तेषां व्यवहारः प्राच्यादि व्यवहारः । तस्य हेतुः प्राच्यादि व्यवहारहेतुः । इति विग्रहः । शाब्दबोधप्रकरस्तु इत्थम् ।

येषां इत्यत्र यच्छब्दस्य समुदायोऽर्थः । समुदायस्य आधेयता संबंधेन षष्ठ्यर्थे घटिततायां अन्वयः । घटितताया: निरूपितत्वसंबंधेन आदिशब्दार्थ घटकतावानित्येकदेश घटकतायामन्वयः । घटकतावतः अभेदसंबंधेन प्राच्य शब्दार्थे प्राक्दिशि अन्वयः । तथा च समुदाय निष्ठ घटिततानिरूपित घटकतावदभिन्नः प्राच्यः । इति विग्रहवाक्यात् शाब्दबोधः । समासवाक्यात्तु प्राच्यनिष्ठ घटकतानिरूपित घटकता वदभिन्नः समुदायः ।

समुदायस्य आधेयतासंबंधेन षष्ठयर्थं विषयतायाँ अन्वयः विषय तायाः निरूपकत्वसंबंधेन व्यवहार शब्दार्थं ज्ञानजनकशब्दप्रयोग इत्येक देश ज्ञानेऽन्वयः। शब्दप्रयोगस्य आधेयतासंबंधेन षष्ठयर्थ कार्यताया मन्वयः। कार्यतायाः निरूपितत्वसंबंधंधेन हेतु शब्दार्थ कारणतावान् इत्येकदेश कारणतायामन्वयः। कारणतावत्याः अभेदसंबंधेन दिशि अन्वयः।

तथा च प्राच्यनिष्ठ घटकतानिरूपित घटिततावदभिन्न समुदाय निष्ठ विषयतानिरूपक ज्ञानजनकशब्दप्रयोगनिष्ठ कार्यतानिरूपित कारणतावदभिन्ना दिक्। इदं खलु लक्षणवाक्यं अनेन वाक्येन दिशः लक्षणमुच्यते। तत्किमिति चेत्–प्राच्यादिव्यवहारनिष्ठ कार्यतानिरूपित कारणत्वं दिशः लक्षणम्।

दिशि लक्षणसमन्वयः। कथमिति चेत् इयं प्राची इयं उदीची इत्याकारक प्राच्यादि विषयक व्यवहारो जायते। तादृश व्यवहारे विषयः प्राच्यादिः। विषयता प्राच्यादिनिष्ठा। प्राच्यादिनिष्ठविषयता किंनिरूपिता व्यवहारनिरूपिता। सः व्यवहारः प्राच्यादिनिष्ठ विषयतानिरूपको भवति। कुतः इति चेत् या यन्निरूपिता सा तन्निरूपिका भवति इति न्यायात्। व्यवहारः कार्यम्। कार्यता व्यवहार निष्ठा। कारणं दिक्। कारणता दिङ्वन्निष्ठा। तयोर्निरूपितत्वं संबंधः। यथा घट इति व्यवहारे घटो व्यवहर्तव्यः घटत्वं व्यवहर्तव्य तावच्छेदकम्। व्यवहारे व्यवहर्तव्यतावच्छेदकस्य कारणत्वात्। तथा च प्राच्यदिग्वान् इति व्यवहारे प्राच्यदिग्वान् व्यवहर्तव्यः। व्यवहर्तव्य तावच्छेदकं प्राच्यदिग्वत्वम्। विशिष्टवाच्य पदोत्तरश्रूयमाण भावार्थ कत्व प्रत्ययः विशेषणमात्रवाचकः इति नियमात् प्राच्यादिदिग्वत्वं प्राच्यादिदिगेव इति लक्षणसमन्वयः।

व्यवहारहेतुत्वं दिशः लक्षणं इत्येवोक्ते घट इति व्यवहारे हेतु भूत घटत्वेऽतिव्याप्तिः। तद्वारणाय व्यवहारे प्राच्यादि विशेषणं देयम्। अतः नातिव्याप्तिः।

# अथ आत्मनिरूपणम्

सथ क्रमप्राप्तं आत्मानं निरूपयति।

## ज्ञानाधिकारणमात्मा

ज्ञानस्याधिकरणं ज्ञानाधिकरणम्। ज्ञान शब्दस्य ज्ञानमर्थः। ज्ञानस्य आधेयतासंबंधेन षष्ठयर्थं आधेयतायां अन्वयः। अधेयतायाः निरूपितत्वसंबंधेन अधिकरणशब्दार्थे एकदेश अधिकरणतायामन्वयः। अधिकरणतावतः अभेदसंबंधेन आत्मनि अन्वयः। तथा च ज्ञाननिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नः आत्मा। आत्मनि ज्ञानं वर्तते। आत्मा अधिकरणं अधिकरणता ज्ञाननिष्ठा। आधेयं ज्ञानम्। आधेयता ज्ञाननिष्ठा। तयोः निरूपितत्वं संबंधः। तथा च ज्ञाननिष्ठ आधेयतानिरूपित अधिकरणतावान् आत्मा। अधिकरणत्वं च आत्मनि वतते इति लक्षणसमन्वयः।

ज्ञाननिष्ठ आधेयतानिरूपित अधिकरणत्वं, काले कालिकसंबंधेन ज्ञानस्य सत्वात्–कालिकसंबंधावच्छिन्न ज्ञाननिष्ठ आधेयतानिरूपित अधिकरणत्वं काले अस्तीति अतिव्याप्तिः। इति चेत् ज्ञाननिष्ठायाँ आधेयतायां समवायसंबंधावच्छिन्नत्वं निवेशनीयम्। काले ज्ञानस्य कालिकसंबंधेन सत्वेऽपि समवायसंबंनेनाभावात्।

समवायसंबंधावच्छिन्न ज्ञाननिष्ठ आघेयतानिरूपित अधिकरणतावान् न कालः किंतु आत्मा एव। अतः नातिव्याप्तिः।

अथ आत्मानं विभजते।

## सः द्विविधः जीवात्मा परमात्मा चेति।

शाब्दबोधप्रकारस्तु पूर्ववत् बोध्यम्। जीवात्मत्वाभिन्न परमात्मत्वाभिन्न द्वित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्नः आत्मा।

अथ परमात्मनः स्वरूपं निरूपयति।

## तत्र ईश्वरः सर्वज्ञः परमात्मा एक एव।

तत्र इत्यत्र यच्छब्दस्य जीवात्मादिसमुदायोऽर्थः। समुदायस्य

**स्वनिष्ठ घटिततानिरूपितत्वसंबंधेन तृल् प्रत्ययार्थ घटकन्वेऽन्वयः। घटकत्वस्य आश्रयतासंबंधेन परमात्मनि अन्वयः। ईश्वरशब्दस्य नियामकतावानर्थः। तस्य अभेदसंबंधेन परमात्मनि अन्वयः।** सर्वं जानाति इति **सर्वज्ञः। जानाति** इत्यत्र ज्ञाधोतोः ज्ञानमर्थः। सर्वस्य आधे**यतासंबंधेन** द्वितीयार्थ विषयतायां अन्वयः। विषयतायाः निरूपकत्व **सम्बन्धेन ज्ञाधात्वर्थ** ज्ञानेऽन्वयः। ज्ञानस्य निरूपितत्वसंबंधेन ति **प्रत्ययार्थ** आश्रयतावानित्येकदेश आश्रयतायामन्वयः। आश्रयतावतः **अभेदसंबंधेन** परमात्मनि अन्वयः।

तथा च **जीबात्मादि** समुदायनिष्ठ घटिततानिरूपित घटकत्वा**श्रय परमात्मा,** नियामकतावदभिन्नः सर्वनिष्ठ विषयतानिरूपक ज्ञान **निरूपित** आश्रयतावदभिन्नः।

इदं खलु लक्षणवाक्यम्। अनेन वाक्येन परमात्मनः लक्षण**मुच्यते।** तथा च सर्वनिष्ठ विषयतानिरूपक ज्ञाननिरूपित आश्रयत्वं परमात्मनः लक्षणम्। अत्र लक्षणसमन्वयः। सर्वनिष्ठविषयतानिरूपकं यत् ज्ञानं अयं घटः अयं पटः इत्याकारक ज्ञानम्। तादृश ज्ञानं ईश्वरे वर्तते। ज्ञानाश्रयत्वं परमात्मनि वर्तते इति लक्षणसमन्वयः।

एकत्वं नाम स्वसजातीयद्वितीयरहितत्वम्।

# अथ मनोनिरूपणम्

अथ मनो निरूपयति।

**सुखाद्युपलब्धिसाधनं इंद्रियं मनः।**

सुखं आदि यस्य तत् सुखादि तस्य उपलब्धिः सुखाद्युपलब्धिः। उपलब्धेः साधनं उपलब्धिसाधनम् इति विग्रहः।

यस्य इत्यत्र यच्छब्दस्य समुदायोऽर्थः। समुदायस्य आधेयता संबंधेन षष्ठ्यर्थ घटिततायां अन्वयः। घटिततायाः निरूपितत्वसंबंधेन आदि शब्दार्थ घटकतावदित्येकदेश घटकतायामन्वयः। घटकतावतः अभेदसंबंधेन सुखेऽन्वयः। तथा च समुदायनिष्ठ घटिततानिरूपित

घटकतावदभिन्नं सुखं इति बिग्रहवाक्यात् शाब्दबोधः। समासवाक्यात् तु सुखनिष्ठ घटकतानिरूपित घटिततावदभिन्नः समुदायः। तस्य आधेयतासंबंधेन षष्ठ्यर्थे विषयतायामन्वयः। विषयतायाः निरूपकत्व संबंधेन उपलब्धि शब्दार्थे साक्षात्कारेऽन्वयः। साक्षात्कारस्य आधेयता संबंधेन षष्ठचर्थे कार्यतायां अन्वयः। कार्यतायाः निरूपितत्वसंबंधेन साधनशब्दार्थ कारणतावदित्येकदेश कारणतायां अन्वयः। कारणतावतः अभेदसंबंधेन मनसि अन्वयः। तथा च सुखनिष्ठ घटकतानिरूपित घटिततावदभिन्न समुदायनिष्ठ बिषयतानिरूपक साक्षात्कारनिष्ठ कार्यता निरूपित कारणतावदभिन्नं मनः इंद्रियाभिन्नम्।

सुखादिनिष्ठ विषयतानिरूपक साक्षात्कारनिष्ठ कार्यतानिरूपित कारणतावत्वे सति इंद्रियत्वं मनसः लक्षणम्।

लक्षणसमन्वयः। अहं सुखी अहं दुःखी इत्यादि सुखदुःखादि विषयक साक्षात्कारं प्रति मनः कारणम्। अतः साक्षात्कारो कार्यः कार्यता साक्षात्कारनिष्ठा। कारणता मनोनिष्ठा। तयोः निरूपितत्वं संबंधः। साक्षात्कारनिष्ठ कार्यतानिरूपित कारणत्वं मनसि वर्तते। इंद्रियत्वमपि वर्तते इति लक्षणसमन्वयः।

इंद्रियत्वं मनसः लक्षणमित्युक्ते चक्षुरिंद्रियेऽतिव्याप्तिः। चक्षुरिंद्रियस्यापि इंद्रियत्वात्। अतः लक्षणे सत्यन्तं निवेशनीयम्। चक्षुरिंद्रिये सुखादिनिष्ठ विषयतानिरूपक साक्षात्कारनिष्ठ कार्यतानिरूपित कारणत्वस्य अभावात् नातिव्याप्तिः।

तावन्मात्रोक्तौ आत्मनि अतिव्याप्तिः। आत्मनः ज्ञानसामान्यं प्रति समवायकारणत्वात् अतिव्याप्तिरिति चेन्न। लक्षणे इंद्रियत्वस्य विशेषणीयत्वात् तत्र नातिव्याप्तिः। आत्मनि इंद्रियत्वाभावान्नातिव्याप्तिः।

# अथ गुणनिरूपणे रूपनिरूपणम्

एतावता प्रबन्धेन द्रव्याणि निरूप्य गुणान्निरूपयन् प्रथम प्राप्तत्वात् रूपं निरूपयति।

## चक्षुर्मात्रग्राह्यो गुणो रूपम् ।

**चक्षुरेव** चक्षुर्मात्रम् । तेन ग्राह्यः चक्षुर्मात्रग्राह्यः । चक्षुःपदस्य **चक्षुरिंद्रियमर्थः** । मात्रपदव्य एवकारोऽर्थः । एवकारस्त्रिविधः । विशेष्य संगत एवकारः । विशेषणसंगत एवकारः क्रियासंगतएवकारश्चेति । **तस्य अन्यो योगो व्यवच्छेदश्चार्थः** । **अन्यो** नाम भेदवानर्थः । **योगो** नाम संबंधोऽर्थ । व्यवच्छेदो नाम अभावोऽर्थः ।

चक्षुरिंद्रियस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसंबंधेन भेदवानित्येक देश भेदेऽन्वयः । भेदवतः स्वनिष्ठप्रतियोगिता निरूपकत्वसंबंधेन योग शब्दार्थ संबंधेऽन्वयः । संबंधस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसंबंधेन अभावे अन्वयः । अभावस्य आश्रयतासंबंधेन ग्रह् धात्वर्थ ज्ञानेऽन्वयः ।

तथा च चक्षुरिंद्रियनिष्ठ प्रतियोगितानिरूपक भेदवन्निष्ठ प्रति योगिता निरूपक संबंधनिष्ठ प्रतियोगितानिरूपक अभावाश्रय ज्ञानम् । मात्रेण इत्यत्र तृतीयायाः जन्यत्वमर्थः । चक्षुरिंद्रियस्य स्वनिष्ठजनकता निरूपितत्वसंबंधेन जन्यत्वेऽन्वयः । जन्यत्वस्य आश्रयतासंबंधेन ज्ञाने अन्वयः । ज्ञानस्य निरूपितत्वसंबंधेन ण्वुल् प्रत्ययार्थं विषयतावदित्येक देश विषयतायामन्वयः । विषयतावतः अभेदसंबंधेन रूपेऽन्वयः । गुण शब्दस्य गुणोऽर्थः । गुणस्य अभेदसंबंधेन रूपेऽन्वयः ।

तथा च चक्षुरिंद्रियनिष्ठ प्रतियोगितानिरूपक भेदवन्निष्ठ प्रति योगितानिरूपक संबंधनिष्ठ प्रतियोगितानिरूपक अभावाश्रय चक्षुरिंद्रिय निष्ठ जनकतानिरूपित जन्यत्वाश्रय ज्ञाननिरूपितविषयतावदभिन्नं गुणाभिन्नं रूपम् ।

इदं खलु लक्षणवाक्यम् । अनेन वाक्येन रूपस्य लक्षणमुच्यते । चक्षुर्भिन्नेंद्रियजन्यज्ञानाविषयत्वे सति चक्षुरिंद्रियजन्य ज्ञानविषयत्वे सति गुणत्वं रूपस्य लक्षणम् ।

चक्षुरिंद्रियेण रूपज्ञानं जायते । रूपज्ञानं प्रति चक्षुरिंद्रियं जनकम् । जनकता चक्षुरिंद्रियनिष्ठा । जन्यं रूपज्ञानम् । जन्यता रूपज्ञाननिष्ठा । तयोर्निरूपितत्वं संबंधः । ज्ञाने विषयः रूपम् ।

विषयत्वं रूपे वर्तते। चक्षुरिंद्रियनिष्ठ जनकतानिरूपित जन्यतावत् यज्ज्ञानं इदं पीतरूपं इदं नीलरूपं इत्याकारक रूपज्ञानं ज्ञानविषयत्वं रूपे वर्तते। किञ्च चक्षुर्भिन्नेंद्रियेण (घ्राणादि इंद्रियेण) रूपज्ञानं न जायते। अतः चक्षुर्भिन्नेंद्रियनिष्ठ जनकतानिरूपित जन्यत्वात् यज्ज्ञानं गन्धादिज्ञानम्। ज्ञाने विषयः गन्धादिः। न तु रूपम्। ज्ञाना विषयत्वं रूपे वर्तते। रूपे गुणत्वमपि वर्तते। इति लक्षण संगतिः।

अतः चक्षुर्भिन्नेंद्रियाग्राह्यत्वे सति चक्षुरिंद्रियग्राह्यत्वे सति गुणत्वं रूपस्य लक्षणम्।

गुणत्वं रूपस्य लक्षणमित्येवोक्तौ रसादीनामपि गुणत्वात् तत्र अतिव्याप्तिः। अतः चक्षुर्मात्रग्राह्यत्वस्य विशेषणीयत्वेन रसादीनां चक्षुर्भिन्नेंद्रियग्राह्यत्वात् तत्र नातिव्याप्तिः।

चक्षुरिंद्रियग्राह्यत्वं रूपस्य लक्षणं इत्येवोक्तौ संख्यायामतिव्याप्तिः। तत्कुतः इति चेत् चक्षुरिंद्रियेण अयमेकः इमौ द्वौ इति संख्याज्ञानं जायते। अतः चक्षुरिंद्रियजन्यज्ञानविषयः संख्या। विषयत्वं संख्यायां वर्तते इति अतिव्याप्तिः। अतः मात्रपदं निवेशनीयम्। (चक्षुर्भिन्नें द्रियाग्राह्यत्वं निसेशनीयम्।) चक्षुर्भिन्नत्वगिंद्रियेणापि अयमेकः इमौ द्वौ इत्याकारकसंख्याज्ञानं उत्पद्यते। अतः संख्यायाः चक्षुर्भिन्नत्वगिंद्रिय ग्राह्यत्वात् अग्राह्यत्वं नास्तीति नातिव्याप्तिः।

चक्षुर्भिन्नेंद्रियाग्राह्यत्वं रूपस्य लक्षणमित्येवोक्तौ गुरुत्वे अति व्याप्तिः। तत्कुतः इति चेत् तस्य अतींद्रियत्वात् चक्षुर्भिन्नेंद्रियजन्य-ज्ञानविषयत्वं तत्र नास्ति अविषयत्वं तत्र वर्तते इति अतिव्याप्तिः। अतः चक्षुरिंद्रियग्राह्यत्वं (चक्षुरिंद्रियजन्यज्ञानविषयत्वं) निवेशनीयम्। गुरुत्वस्य अतींद्रियत्वेन चक्षुरिंद्रियेणापि गुरुत्वज्ञानं नोत्पद्यते।

गुणत्वानुपादाने दलद्वयमात्रोक्तौ सुवर्णत्वजातौ अतिव्याप्तिः। तत्कथमिति चेत् चक्षुरिंद्रियेण यथा सुवर्णज्ञानं भवति तथैव सुवर्णत्व ज्ञानमपि भवति। कुतः इति चेत् येनेंद्रियेण या व्यक्तिर्गृह्यते तेनें-द्रियेण तन्निष्ठा जातिः तदभावश्च गृह्यते इति न्यायात् चक्षुरिंद्रिय जन्यज्ञानविषयत्वं आयातम्। चक्षुर्भिन्नेंद्रियेण यथा सुवर्णज्ञानं नोत्पद्यते

तथा सुवर्णत्वज्ञानमपि नोत्पद्यते । अतः चक्षुर्भिन्नेंद्रियजन्यज्ञानाविषयत्वमपि सुवर्णत्वे वर्तते इति अतिव्याप्तिः । अतः गुणत्वं निवेशनीयम् । इदानीं नातिव्याप्तिः । कुतः इति चेत् सुवर्णत्वजातौ गुणत्वं नास्ति इति नातिव्याप्तिः ।

एवमपि परमाणुरूपे अव्याप्तिः । कुतः इति चेत् परमाणुरूपस्य अतींद्रियत्वेन चक्षुरिंद्रियन्वेन चक्षुरिंद्रियजन्यज्ञानविषयत्वं नास्तीति अव्याप्तिः । अतः जातिघटितलक्षणं कार्यम् । चक्षुर्भिन्नेंद्रियजन्यज्ञान विषयता असमानाधिकरणा चक्षुरिंद्रिकजन्यज्ञानविषयता समानाधिकरणा या जातिः तादृशजातिमत्वं रूपस्य लक्षणम् । इदानीं परमाणुरूपे नाव्याप्तिः । कुतः इति चेत् चक्षुर्भिन्नेंद्रियजन्यं यज्ज्ञानं स्पर्शादि ज्ञानम् । ज्ञाने विषयः स्पर्शादिकं विषयता स्पर्शादिनिष्ठा विषयता समानाधिकरणा या जातिः स्पर्शत्वादि जातिः न तु रूपत्वरूपा जातिः । अतः विषयता असमानाधिकरणा या जातिः रूपत्वरूपा जातिः किञ्च चक्षुरिंद्रियजन्यं यज्ज्ञानं रूपज्ञानम् । ज्ञाने विषयः रूपम् । विषयता रूपनिष्ठा । विषयता समानाधिकरणा या जातिः रूपत्वरूपा जातिः तादृशजातेः परमाणुरूपे सत्वात् नाव्याप्तिः ।

एवं सति दलद्वयमात्रोक्तौ गुणत्वजातिमादाय रसादौ अतिव्याप्तिः। अतः गुणत्वव्याप्यत्वं निवेशनीयम् । चक्षुर्भिन्नेंद्रियजन्यज्ञानविषयता असमानाधिकरणा चक्षुरिंद्रियजन्यज्ञानविषयतासमानाधिकरणा गुणत्व व्याप्या या जातिः तादृशजातिमत्वं रूपस्य लक्षणम् । इदानीं रसादौ नातिव्याप्तिः । कुतः इति चेत् । गुणत्वस्य गुणत्वव्याप्यत्वाभावात् । गुणत्वजातिमादाय रसादौ न अतिव्याप्तिः ।

तथा च चक्षुर्भिन्नेंद्रियजन्यज्ञानविषयतानिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ अधिकरणतानिरूपित आधेयत्वाभाववती, चक्षुरिंद्रिय जन्यज्ञानविषयतानिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ अधिकर णतानिरूपित आधेयतावती गुणत्वव्याप्या या जातिः तादृशजातिमत्वं रूपस्य लक्षणम् ।

## तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात् सप्तविधम् ।

विभागो नाम सामान्यधर्मव्याप्यविरुद्धनानाधर्मप्रकारक ज्ञानानुकूल व्यापारः । सामान्यधर्मव्याप्य धर्माः कतिपयाः ? इति शंकां परिहर्तुं विभागो वक्तव्यः । लक्षणकथनानन्तरं सामान्यधर्मज्ञानं जायते। तदनन्तरं सामान्य धर्मव्याप्यधर्माः कतिपयाः इति शंका उदेति। इदानीं तत्परिहाराय सामान्यधर्मव्याप्य विरुद्ध नानाधर्मप्रकारक ज्ञानानु कूल व्यापाररूप विभागं कथयति । अत्र शाब्दबोधप्रकारस्तु पूर्ववद् बोध्यम् ।

शुक्ल नील पीत रक्त हरित कपिश चित्रनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रय असाधारण धर्माभिन्न सप्तत्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नं रूपम् ।

रूपस्य अधिकरणमाह ।

## पृथिवीजलतेजोवृत्ति ।

पृथिवीजलतेजोनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नं रूपम् ।

तस्य प्रभेदमाह तत्रेति ।

## तत्र पृथिव्यां सप्तविधम्

तत्र इत्यत्र यच्छब्दस्य पृथिव्यादि समुदायो अर्थः । पृथिव्यादि समुदायस्य स्वनिष्ठघटिततानिरूपितत्वसंबंधेन तृल् प्रत्ययार्थ घटकत्वेऽन्वयः । पृथिव्यादि समुदायनिष्ठ घटिततानिरूपित घटकत्वम् । तस्य आश्रयतासंबंधेन पृथिव्यामन्वयः । पृथिव्यां इत्यत्र सप्तम्याः आधेयत्वं अर्थः । पृथिव्याः स्वनिष्ठ अधिकरणतानिरूपितत्वसंबंधेन आधेयत्वे अन्वयः । तथा च पृथिव्यादि समुदायनिष्ठ घटिततानिरूपित घटकत्वाश्रय पृथिवीनिष्ठ अधिकरणतानिरूपित आधेयत्वम् ।

सप्तविधं इत्यत्र सप्तविधाः यस्य तत् इति विग्रहः । यस्य इत्यत्र षष्ठ्याः आधेयत्वमर्थः । यत् पदार्थस्य स्वनिष्ठ अधिकरणता निरूपितत्वसंबंधेन आधेयत्वेऽन्वयः । तथा च यन्निष्ठ अधिकरणता निरूपित आधेयत्वम् । सप्त पदस्य लक्षणया सप्तत्वसंख्यापर्याप्त्यधि-

करणमर्थः। विधा शब्दस्य विभाजकधर्मान्यतमवन्तः अर्थः सप्तसंख्या पर्याप्त्यधिकरणस्य अभेदसंबंधेन विभाजकधर्मान्यतमेषु अन्वयः। तथा च सप्तत्व संख्यापर्याप्त्यधिकरणाभिन्न विभाजकधर्मान्यतमवन्तः। यन्निरूपित आधेयत्वस्य आश्रयतासंबंधेन विभाजकधर्मान्यतमेष्वन्वयः।

तथा च सप्तत्व संख्यापर्याप्त्यधिकरण विभाजकधर्यान्यतमवन्तः यन्निरूपित आधेयत्वाश्रयाः। इति विग्रहवाक्यजन्यबोधः।

समासवाक्यात्तु सप्तसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावत्। तस्य अभेदसंबंधेन रूपेऽन्वयः। तथा च सप्तत्व संख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नं रूपम्। पृथिवीनिष्ठ अधिकरणता निरूपित आधेयत्वस्य आश्रयतासंबंधेन विभाजकधर्मेष्वन्वयः। तथा च सप्तत्व संख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नं रूपं पृथिवीनिष्ठ अधिकरणतानिरूपित आधेयता वदभिन्नम्।

## अभास्वरशुक्लं जले।

जले इत्यत्र सप्तम्याः आधेयत्वर्थः। जलस्य स्वनिष्ठ अधिकरणता निरूपितत्वसंबंधेन आधेयत्वेऽन्वयः। आधेयत्वस्य आश्रयतासंबंधेन अभास्वरशुक्लरूपेऽन्वयः। तथा च अभास्वरशुक्लरूपं जलनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयम्।

## भास्वरशुक्लं तेजसि।

तेजसि इत्यत्र सप्तम्याः आधेयत्वमर्थः। तेजसः स्वनिष्ठ अधिकरणतानिरूपितत्वसंबंधेन आधेयत्वेऽन्वयः। आधेयत्वस्य आश्रयतासंबंधेन भास्वरशुक्लरूपे अन्वयः। तथा च भास्वरशुक्लरूपं तेजोनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयः।

# अथ रसनिरूपणम्

अथ रसं निरूपयति रसनेति ।

**रसनग्राह्यो गुणो रसः ।**

रसनेन ग्राह्यः रसनग्राह्यः इति विग्रहः । रसन शब्दस्य रसनेंद्रियमर्थः । तृतीयायाः जन्यत्वमर्थः । रसनेंद्रियस्य स्वनिष्ठ जनकता निरूपितत्वसंबंधेन जन्यत्वे अन्वयः । जन्यत्वस्य आश्रयतासंबंधेन ग्रह धात्वर्थ ज्ञाने अन्वयः । ज्ञानस्य निरूपितत्वसंबंधेन ण्वुल् प्रत्ययार्थ विषयतावदित्येकदेश विषयतायामन्वयः । विषयतावतः अभेदसंबंधेन रसे अन्वयः । गुणस्य अभेदसंबंधेन रसेऽन्वयः ।

तथा च रसननिष्ठ जनकतानिरूपित जन्यत्वाश्रय ज्ञान निरूपित विषयतावदभिन्नः रसः गुणाभिन्नः ।

रसज्ञानं प्रति रसनेंद्रियं जनकम् । रसज्ञानं जन्यम् । जनकता रसनेंद्रियनिष्ठा । जन्यता रसज्ञाननिष्ठा तयोः निरूपितत्वं सम्बन्धः । तथा च रसनेंद्रियनिष्ठ जनकतानिरूपित जन्यत्वावत् यत् ज्ञानं रसज्ञानं ज्ञाने विषयः रसः । विषयतावान् रसः विषयतावदभिन्नः रसः गुणाभिन्नः ।

रसनेंद्रियजन्यज्ञानविषयत्वे सति गुणत्वं रसस्य लक्षणम् । रसनेंद्रियजन्यं यज्ज्ञानं अयं मधुर रसः अयं आम्लरसः इत्यादि ज्ञानम् । ज्ञाने विषयः रसः । ज्ञानविषयत्वं रसे वर्तते । गुणत्वमपि वर्तते इति लक्षणसमन्वयः ।

विशेष्यमात्रोत्पादाने (गुणत्वं रसस्य लक्षणं इत्येवोक्तौ) रूपादौ अतिव्याप्तिः । तत्रापि गुणत्वस्य सत्वात् । अतः रसनेंद्रियजन्यज्ञान विषयत्वं (विशेषणं) देयम् । रूपादिषु रसनेंद्रियजन्यज्ञानविषयत्वं नास्तीति नातिव्याप्तिः ।

रसनेंद्रियजन्यज्ञानविषयत्वं रसस्य लक्षणं इत्येवोक्ते (विशेष्यानुपादाने) रसत्वे अतिव्याप्तिः । कथमिति चेत् यो गुणः यदिंद्रियग्राह्यः तन्निष्ठा जातिः तदभावश्च तदिंद्रियग्राह्यः इति न्यायात् रसत्वे अति

व्याप्तिः । अतः गुणत्वं लक्षणे निवेशनीयं रसत्वे गुणत्वाभावान्नाति-व्याप्तिः ।

**स च मधुराम्ललवणकटुकसायतिक्तभेदात् षड्विधः ।**

षट् विधाः यस्य सः षड्विधः इति विग्रहः । षट्पदस्य षट्त्वसंख्या पर्याप्त्यधिकरणं अर्थः । विधा शब्दस्य विभाजक धर्मान्यतमवन्तः अर्थः । षट्त्वसंख्यापर्याप्त्यधिकरणस्य अभेदसंबंधेन विभाजक धर्मेषु अन्वयः । तथा च षट्त्वसंख्यापर्याप्त्यधिकरणाभिन्न विभाजक धर्मान्यतमवन्तः । यस्य इत्यत्र यच्छब्दस्य यत् अर्थः । यत् पदार्थस्य स्वनिष्ठ अधिकरणता निरूपितत्वसंबंधेन षष्ठचर्थ आधेयत्वे अन्वयः । तथा च यन्निरूपित आधेयन्वम् । तथा च षट्त्व संख्यापर्याप्त्यधि करणाभिन्न विभाजक धर्मान्यतमवन्तः यन्निरूपित आधेयत्वाश्रयाः । इति विग्रहवाक्यात् शाब्दबोधः । समासवाक्यात् तु षट्त्वसंख्यापर्या प्त्यधिकरण विभाजक धर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणता वान् । तस्य अभेदसंबंधेन रसे अन्वयः । तथा च अधिकरणतावद भिन्नः रसः ।

मधुराम्ललवणकटुकषायतिक्तभेदात् इत्यत्र मधुरश्च आम्लश्च लवणश्च कटुश्च कषायश्च तिक्तश्च । मधुराम्ल लवण कटु कषायतिक्ताः । तेषां भेदः । तिक्तभेदः तस्मात् मधुराम्ललवण कटुविषयतिक्तभेदात् । मधुराम्ललवण कटुकषायतिक्तानां इत्यत्र षष्ठ्याः आधेयत्वमर्थः । मधुराम्ललवण कटुकषायतिक्तानां स्वनिष्ठ अधिकरणतानिरूपितत्वसंबंधेन षष्ठचर्थ आधेयत्वे अन्वयः । तथा च मधुराम्ललवण कटुकषायतिक्तनिष्ठ अधिकरणतानिरूपित आधेयत्वम् । तस्य आश्रयतासंबंधेन भेद शब्दार्थ असाधारण धर्मेषु अन्वयः । तथा च आधेयत्वाश्रय असाधारण धर्माः । तेषां पंचम्यर्थ अभेद संबंधेन एकदेश विभाजक धर्मेषु अन्वयः । तथा च मधुराम्ल लवण कटु कषायतिक्तनिष्ठ अधिकरणतानिरूपित अधेयत्वाश्रय असाधारण धर्मा भिन्न षट्त्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतमनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्नः रसः ।

रसस्य अधिकरणमाह ।

## पृथिवींजलवृत्तिः ।

पृथिवी च जलं च पृथिवीजले–पृथिवीजलयोः वृत्तिः यस्य सः पृथिवीजलवृत्तिः । यस्य इत्यत्र यच्छब्दस्य यत्पदार्थो अर्थः । यत्पदार्थस्य स्वनिष्ठ अधिकरणतानिरूपित्वसंबंधेन षष्ठ्यर्थ आधेयत्वेऽन्वयः । तथा च यन्निरूपित आधेयत्वम् । पृथिवींजलयोः इत्यत्र सप्तम्याः अधिकरणत्वम् । पृथिवीजलयोः आधेयतासंबंधेन अधिकरणतायामन्वयः । तथा च पृथिवीजलनिष्ठ अधिकरणतानिरूपित आधेयत्वम् । यन्निरूपित आधेयत्वस्य आश्रयतासंबंधेन पृथिवीजलनिष्ठ अधिकरणतानिरूपित आधेयत्वेऽन्वयः ।

तथा च पृथिवीजलनिष्ठ अधिकरणतानिरूपित आधेयत्वं यन्निरूपित आधेयत्वाश्रयः इति विग्रहवाक्यजन्यशाब्दबोधः । समासवाक्यात् तु पृथिवीजलनिष्ठ अधिकरणतानिरूपित आधेयतावान् । तस्य अभेद संबंधेन रसेऽन्वयः ।

तथा च पृथिवीजलनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नः रसः ।

तस्य प्रभेदमाह ।

## तत्र पृथिव्यां षड्विधः ।

तत्र पृथिवी इत्यत्र तच्छब्दार्थं पृथिव्यादि समुदायस्य स्वनिष्ठ घटितता निरूपितत्वसंबंषेन तृल्प्रत्ययार्थं घटकत्वेऽन्वयः । घटकत्वस्य आश्रयतासंबंधेन पृथिव्यामन्वयः । पृथिव्यादि समुदायनिष्ठ घटितता निरूपित घटकत्वम् । पृथिव्यां इत्यत्र सप्तम्याः आधेयत्वं अर्थः । पृथिव्यादि समुदायनिष्ठ घटितनानिरूपित घटकत्वस्य आश्रयतासंबंधेन पृथिव्यामन्वयः । तथा च पृथिव्यादि समुदायनिष्ठ ग्रटिततानिरूपित घटकत्वाश्रय पृथिवीनिष्ठ अधिकरणतानिरूपित आधेयत्पम् ।

षट् विधाः यस्य सः षद्विधः इनि विग्रहः । षट्पदस्य षट्त्व संख्यापर्याप्त्यधिकरणमर्थः । विधा शब्दस्य विभाजकधर्मान्यमवन्तः अर्थः ।

षट्त्व संख्यापर्याप्त्यधिकरणानां अभेदसंबंधेन विभाजक धर्मेषु अन्वयः। तथा च षट्त्व संख्यापर्याप्त्यधिकरणाभिन्न विभाजकधर्मान्यतमवन्तः। यस्य इत्यत्र षष्ठ्याः आधेयत्वमर्थः। यत्पदार्थस्य स्वनिष्ठ अधिकरणता निरूपितत्वसंबंधेन आधेयत्वेऽन्वयः। तथा च यन्निरूपित आधेयत्वम्। तस्य आश्रयतासंबंधेन विभाजकधर्मेष्वन्वयः। तथा च षट्त्व संख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतमवन्तः यन्निरूपित आधेयत्वाश्रयाः। इति विग्रहवाक्यात् शाब्दबोधः। समासवाक्यात् षट्त्व संख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावान्। तस्य अभेदसंबंधेन रसेऽन्वयः। पृथिव्यादि समुदायनिष्ठ घटिततानिरूपित घटकत्वाश्रय पृथिवीनिष्ठ अधिकरणता निरूपित आधेयत्वस्य आश्रयता संबंधेन रसेऽन्वयः।

तथा च षट्त्व संख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नः रसः पृथिव्यादि समुदायनिष्ट घटिततानिरूपित घटकत्वाश्रय पृथिवीनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयः।

### जले मधुर एव।

जले इत्यत्र सप्तम्याः आधेयत्वं अर्थः। जलस्य निरूपितत्व संबंधेन आधेयत्वेऽन्वय। तस्य आश्रयतासंबंधेन मधुर रसेऽन्वयः।

तथा च मधुररसः जलनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयः।

## अथ गन्धनिरूपणम्

गन्धं लक्षयति घ्राणेति।

### घ्राणग्राह्यो गुणो गन्धः।

घ्राणेन ग्राह्यः घ्राणग्राह्यः इति विग्रहः। घ्राणशब्दस्य घ्राणेंद्रियमर्थः। घ्राणेंद्रियस्य स्वनिष्ठ जनकतानिरूपितत्वसंबंधेन तृतीयार्थं जन्यत्वेऽन्वयः। जन्यत्वस्य आश्रयतासंबंधेन ग्रह धात्वर्थं ज्ञानेऽन्वयः। ज्ञानस्य निरूपितत्वसंबंधेन ण्वुल् प्रत्ययार्थ विषयतावदित्येकदेश विषय

तायां अन्वयः। तस्य अभेदसंबंधेन गन्धेऽन्वयः। गुणस्याभेदसंबंधेन गन्धे अन्वयः। तथा च घ्राणेंद्रियनिष्ठ जनकतानिरूपित जन्यत्वाश्रय ज्ञाननिरूपित विषयतावदभिन्नः गुणाभिन्नः गन्धः।

गन्धज्ञानं प्रति घ्राणेंद्रियं जनकम्। गन्धज्ञानं जन्यम्। जन्यता गन्धज्ञाननिष्ठा जनकता घ्राणेंद्रियनिष्ठा तयोः निरूपितत्वसंबंधः। तथाच घ्राणेंद्रियनिष्ठ जनकता निरूपित जन्यतावत् यज्ज्ञानं गंधज्ञानम्। ज्ञाने विषयः गन्धः। विषयतावान् गन्धः। विषयतावदभिन्नः गंधः। गुणाभिन्नोऽपि गन्धः।

घ्राणेंद्रियजन्यज्ञानविषयत्वे सति गुणत्वं गन्धस्य लक्षणं। घ्राणेंद्रियजन्यं यज्ज्ञानं अयं सुगंधः अयं दुर्गन्धः। इत्यादिज्ञानम्। ज्ञाने विषयः गन्धः। ज्ञानविषयत्वं गन्धे वर्तते। गुणत्वं अपि वर्तते इति लक्षणसमन्वयः।

विशेषणानुपादाने (गुणत्वं गंधस्य लक्षणमित्युक्ते) रूपादौ गुणत्वस्य सत्वात् तत्र अतिव्याप्तिः। इदानीं विशेषणोपादाने रूपादीनां घ्राणेंद्रियजन्यज्ञानविषयत्वाभावात् तत्र नातिव्याप्तिः।

विशेष्यानुपादाने (घ्राणेंद्रियजन्यज्ञानविषयत्वं गन्धस्य लक्षण मुक्ते) यो गुणः यदिंद्रियग्राह्यः। तन्निष्ठा जातिरपि तदिंद्रियग्राह्येति नियमात् गन्धस्यापि घ्राणेंद्रियजन्यज्ञानविषयत्वात् तत्र अतिव्याप्तिः इति न वाच्यं। गंधत्वे गुणत्वाभावात् तत्र नातिव्याप्तिः।

अथ गंधं विभजते।

## सः द्विविधः। सुरभिरसुरभिश्चेति।

द्वे विधे यस्य सः द्विविधः इति विग्रहः। द्वि शब्दस्य द्वित्वं संख्या पर्याप्त्यधिकरणौ अर्थः। तयोरभेदसंबंधेन विधाशब्दार्य विभाजक धर्मान्यतर दित्येकदेश वियाजकधर्मयोः अन्वयः। तथाच द्वित्वसंख्या पर्याप्त्यधिकरण विभाजक धर्मान्यतरत्। यस्य इत्यत्र यत्पदस्य यत्पदार्थोऽर्थः। तस्य निरूपितत्व संबंधेन षष्ठ्यर्थे आधेयत्वेऽन्वयः। तथाच यन्निरूपित आधेयत्वाश्रयौ इति विग्रहवाक्यात् शाब्दबोधः। समास वाक्यात् तु द्वित्वसंख्यापर्याप्त्यधिकरणविभाजक

धर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावान्। तस्य अभेद संबंधेन गन्धेऽन्वयः। अधिकरणतावदभिन्नः गन्धः। सुरभि शब्दस्य लक्षणया सुरभिगन्धत्वमर्थः। तस्य अभेदसंबंधेन एकदेश विभाजक धर्मान्यतरस्मिन्नन्वयः। असुरभिपदस्य लक्षणया असुरभिगन्धत्वमर्थः। तस्य अभेदसंबंधेन एकदेश विभाजकधर्मान्यतरस्मिन्नन्वयः।

तथा च सुरभिगन्धत्वाभिन्न असुरभिगन्धत्वाभिन्न द्वित्वसंख्या पर्याप्त्यधिकरण विभाजकधर्मान्यतरनिष्ठ आधेयतानिरूपित अधिकरण तावदभिन्नः गन्धः।

अथ गन्धस्याधिकरणमाह।

## पृथिवीमात्रवृत्तिः।

पृथिवी एव पृथिवीमात्रम्। तस्मिन् वृत्तिः यस्य सः पृथिवी मात्रवृत्तिः। पृथिवीपदस्य पृथिवी अर्थः। एवकारस्य अन्योयोगो व्यवच्छेदश्चार्थः।

पृथिव्याः स्वनिष्ठ प्रतियोगितानिरूपकत्व संबंधेन अन्यशब्दार्थ भेदवानित्येकदेश भेदेऽन्वयः। भेदवतः स्वनिष्ठ प्रतियोगितानिरूपकत्व संबंधेन योगशब्दार्थ संबंधेऽन्वयः। संबंधस्य स्वनिष्ठप्रतियोगितत्निरू पकत्वसंबंधेन व्यवच्छेदशब्दार्थ अभावेऽन्वयः। अभावस्य आश्रयता संबंधेन गन्धेऽन्वयः।

किञ्च पृथिवीशब्दस्य पृथिवी अर्थः। सप्तम्याः अधिकरणत्व मर्थः। पृथिव्याः आधेयतासंबंधेन अधिकरणतयामन्वयः। पृथिवीं निष्ठ अधिकरणता। अधिकरणतायाः निरूपितत्वसंबंधेन वृत्तिशब्दार्थ आधेयत्वेऽन्वयः पृथिवीनिष्ठ अधिकरणतानिरूपित आधेयत्वम्। यस्य इन्यत्र यन्निरूपित आधेयत्वं इति शाब्दबोधः। यन्निरूपित आधेयत्वस्य आश्रयतासंबंधेन पृथिवीनिष्ठ अधिकरणतानिरूपित आधेयत्वेऽन्वयः। पृथिवीनिष्ठ अधिकरणतानिरूपित आधेयत्वं यन्निपित आधेयत्वाश्रयः इति विग्रहवाक्यजन्यबोधः। समासवाक्यात् पृथिवीनिष्ठ अधिकरणता निरूपित आधेयतावान् तस्य अभेदसंबंधेन गन्धेऽन्वयः।

तथा च पृथिवीनिष्ठ प्रतियोगितानिरूपक भेदवन्निष्ठ प्रतियोगिता निरूपक संबंधनिष्ठप्रतियोगितानिरूपक अभावाश्रयः गन्धः पृथिवीनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नः ।

# अथ स्पर्शनिरूपणम्

अथ स्पर्शं निरूपयति ।

**त्वगिंद्रियमात्रग्राह्यो गुणः स्पर्शः ।**

त्वक् च तत् इंद्रियं च त्वगिंद्रियम् । त्वगिंद्रियमेव त्वगिंद्रिय मात्रम् । तेन ग्राह्यः त्वगिंद्रियमात्रग्राह्यः । इति विग्रहः । त्वगिंद्रियस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसंबंधेन अन्यशब्दार्थे भेदवानित्येक देश भेदेऽन्वयः । भेदवतः स्वनिष्ठप्रतियोगितानिरूपकत्वसंबंधेन योग शब्दार्थसंबंधेऽन्वयः । संबंधस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसंबंधेन व्यवच्छेद शब्दार्थे अभावेऽन्वयः । अभावस्य आश्रयतासंबंधेन स्पर्श शब्दार्थे स्पर्शेऽन्वयः । तथा च – त्वगिंद्रियनिष्ठ प्रतियोगितानिरूपक भेदवन्निष्ठ प्रतियोगितानिरूपक संबंधनिष्ठ प्रतियोगितानिरूपक अभावाश्रयः स्पर्शः । तृतीयायाः जन्यत्वमर्थः । त्वगिंद्रियस्य स्वनिष्ठ जनकतानिरूपितत्वसंबंधेन जन्यन्वेऽन्वयः । जन्यत्वस्य आश्रयता संबंधेन ग्रह् धात्वर्थे ज्ञानेऽन्वयः । ज्ञानस्य निरूपितत्वसंबंधेन ण्वुल् प्रत्ययार्थ विषयतावानित्येकदेश विषयतायामन्वयः । विषयतावतः अभेद संबंधेन स्पर्शेऽन्वयः । गुणस्य अभेदसंबंधेन स्पर्शेऽन्वयः ।

तथा च त्वगिंद्रियनिष्ठ प्रतियोगितानिरूपक भेदवन्निष्ठ प्रतियोगितानिरूपक संबंधनिष्ठ प्रतियोगितानिरूपक अभावाश्रयः त्वगिंद्रिय निष्ठ जनकतानिरूपित जन्यत्वाश्रय ज्ञाननिरूपित विषयतावदभिन्नः स्पर्शः इति शाब्दबोधः ।

त्वगिंद्रियभिन्नेंद्रियजन्य ज्ञानाविषयत्वे सति त्वगिंद्रियभिन्नेंद्रियजन्य ज्ञानाविषयत्वे सति गुणत्वं स्पर्शस्य लक्षणम् । लक्षण समन्वयः । त्वगिंद्रियेण स्पर्शज्ञानं जायते । स्पर्शज्ञानं प्रति त्वगिंद्रियं जनकम् । त्वगिंद्रिय

अन्यं यज्ज्ञानं अयं उष्णस्पर्शः अयं शीतस्पर्शः इत्याकरकं ज्ञानम्। ज्ञाने विषयः स्पर्शः विषयत्वं स्पर्शे वर्तते। जनकता त्वगिंद्रियनिष्ठा। जन्यता स्पर्शनिष्ठा। तयोर्निरूपितत्वं संबंधः। तथा च त्वगिंद्रिय निष्ठ जनकतानिरूपित जन्यत्वाश्रय ज्ञाननिरूपित विषयत्वं स्पर्शे वर्तते। त्वगिंद्रियभिन्नेंद्रियं चक्षुरादिकम्। तज्जन्यं यज्ज्ञानं रूपादि ज्ञानम्। न तु स्पर्शज्ञानम्। ज्ञाने विषयः रूपादि। विषयत्वं रूपादिषु वर्तते न तु स्पर्शे। अविषयत्वं स्पर्शे वर्तते। गुणत्वमपि स्पर्शे वर्तते इति लक्षणसमन्वयः।

गुणत्वं स्पर्शस्य लक्षणमित्युक्ते रूपादीनां अपि गुणत्वात्तत्र अति व्याप्तिः। अतः त्वगिंद्रियग्राह्यत्वस्य विशेषणीयत्वात् रूपादीनां गुण-त्वेऽपि त्वगिंद्रियग्राह्यत्वाभावात् तत्र नातिव्याप्तिः।

त्वगिंद्रियग्राह्यत्वे सति गुणत्वं स्पर्शस्य लक्षणं इत्येवोक्तौ संख्या दीनामपि गुणत्वात् त्वगिंद्रियग्राह्यत्वाच्च तत्र अतिव्याप्तिः। अतः मात्रपदं लक्षणे निवेशनीयम्। संख्यायाः त्वगिंद्रियभिन्न चक्षुरिंद्रिय ग्राह्यत्वात् तत्र अग्राह्यत्वं नास्तीति नातिव्याप्तिः।

विशेष्यानुपादाने (गुणत्वानुपादाने) यो गुणः यदिंद्रियग्राह्यः तन्निष्ठा जातिः तदभावश्च तदिंद्रयेण गृह्यते इति नियमात् स्पर्शत्वे अतिव्याप्तिः। स्पर्शत्वे त्वगिंद्रियग्राह्यत्वं वर्तते। त्वगिंद्रियभिन्न चक्षु रिंद्रियेण स्पर्शत्वज्ञानं न जायते। अतः स्पर्शत्वे अग्राह्यत्वं अस्ति इति अतिव्याप्तिः इति चेन्न। गुणत्वस्य विशेषणीयत्वात् स्पर्शत्वे गुणत्वा भावान्नातिव्याप्तिः।

त्वगिंद्रियभिन्नेंद्रियाग्राह्यत्वे सति गुणत्वं स्पर्शस्य लक्षणं इत्युक्तौ अतींद्रिय गुरुत्वादौ अतिव्याप्तिः। किञ्च गुरुत्वादीनां अतींद्रियत्वात् गुणत्वाच्च तत्र अतिव्याप्तिः इति न वाच्यम्। त्वगिंद्रियग्राह्यत्वस्य विशेषणीयत्वात् गुरुत्वादीनाँ त्वगिंद्रियग्राह्यत्वाभावात् नातिव्याप्तिः।

एवं सति परमाणुस्पर्शेऽव्याप्तिः। परमाणु स्पर्शस्य अतींद्रिय त्वेन त्वगिंद्रियजन्यज्ञानविषयत्वाभावात् अव्याप्तिः। अतः जातिघटित लक्षणं कार्यम्। तथा च त्वगिभन्नेंद्रियजन्यज्ञानविषयता असमानाधि-

करणा त्वगिंद्रियजन्यज्ञानविषयतासमानाधिकरणा गुणत्वव्याप्या या जातिः तादृशजातिमत्वं स्पर्शस्य लक्षणम्। तादृशजातेः परमाणु स्पर्शेऽपि सत्वात् लक्षणसमन्वयः न अव्याप्तिश्च।

स्पर्शं विभजते। सः इति।

## स च त्रिविधः शीतोष्णानुशीतस्पर्शभेदात्।

शीतं च उष्णं च अनुष्णशीतं च शीतोष्णानुशीतानि तेषां भेदः। तस्मात् इति विग्रहः।

शीतोष्णानुष्णशीतानां इत्यत्र षष्ठ्याः आधेयत्वमर्थः। तेषां निरूपितत्वसंबंधेन आधेयत्वेऽन्वयः। आधेयत्वस्य आश्रयतासम्बन्धेन भेदशब्दार्थं असाधारण धर्मेष्वन्वयः। तथा च शीतोष्णानुष्णाशीत निरूपित आधेयत्वाश्रयः असाधारणशर्मः। तस्य स्वनिष्ठ प्रतियोगिता निरूपकत्व संबंधेन पञ्चम्यर्थ अभेदे अन्वयः। तस्य आश्रयासंबंवेन स्पर्शेऽन्वयः।

त्रिविधः इत्यत्र तिस्रः विधाः यस्य सः त्रिविधः इति विग्रहः। शाब्दबोधप्रकारस्तु इत्थम्। त्रित्वसंख्य पर्याप्त्यधिकरणविभाजक धर्मान्य तमवन्तः यन्निरूपित आधेयत्वाश्रयाः इति विग्रहवाक्यजन्यशाब्दबोधः। समासवाक्यात्तु त्रित्वसंख्यःपर्याप्त्यधिकरण विभाजकधर्मान्यतमवन्तः। तस्य अभेदसंबंधेन स्पर्शेऽन्वयः।

तथा च शीतोष्णानुष्णाशीतनिरूपित आधेयत्वाश्रय असाधारण निष्ठ प्रतियोगितानिरूपक अभेदाश्रय त्रित्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमवदभिन्नः स्पर्शः।

स्पर्शस्याधिकरणमाह।

## पृथिव्यप्तेजोवायुवृत्तिः।

पृथिवी चआपश्च तेजश्च वायुश्च "पृथिव्यप्तेजीवायवः"। तेषु वृत्तिः यस्य सः। सप्तम्याः अधिकरणत्वमर्थः। पृथिव्यप्तेजोवायूनां आधेयतासंबंधेन अधिकरणतायामन्वयः। अधिकरणतायाः निरूपितत्व संबंधेन वृत्तिशब्दार्थ आधेयन्वे अन्वयः। यस्य इत्यत्र षष्ठ्याः आधे- यत्वं अर्थः। यत्पदार्थस्य निरूपितत्वसंबंधेन आधेयत्वेऽन्वयः। यन्नि

रूपित आधेयत्वं तस्य आश्रयतासंबंधेन पृथिव्यप्तेजोवायुनिष्ठ अधिकरणतानिरूपित आधेयत्वेऽन्वयः। तथा च पृथिव्यप्तेजोवायुनिष्ठ अधिकरणतानिरूपित आधेयत्वं यन्निरूपित आधेयत्वाश्रयः। इति विग्रह वाक्यात् शाब्दबोधः। समासवाक्यात् पृथिव्यप्तेजोवायुनिष्ठ अधिकरणतानिरूपित आधेयतावान्। तस्य अभेदसंबंधेन स्पर्शेऽन्वयः।

तथा च पृथिव्यप्तेजोवायुनिष्ठ अधिकरणतानिरूपित आधेयता वदभिन्नः स्पर्शः।

# अथ संख्यानिरूपणम्

अथ संख्यां निरूपयति।

**एकत्वादिव्यवहारहेतुः संख्या।**

एकत्वं आदी एषां ते एकत्वादयः। तेषां व्यवहारः एकत्वादि व्यवहारः। तस्य हेतुः एकत्वादिव्यवहारहेतुः इति विग्रहः। येषां इत्यत्र यच्छब्दस्य समुदायोऽर्थः। षष्ठ्याः घटितत्वमर्थः। समुदायस्य आधेयतासंबंधेन घटितत्वेऽन्वयः समुदायनिष्ठ घटितता। तस्याः निरूपितत्वसंबंधेन आदिशब्दार्थ घटकतावानित्येकदेश घटकतायामन्वयः। तस्य अभेदसंबंधेन एकत्वेऽन्वयः। तथा च समुदायनिष्ठ घटितता निरूपित घटकतावदभिन्नं एकत्वम्। इति विग्रहवाक्यात् शाब्दबोधः। समासवाक्यात्तु एकत्वनिष्ठ घटकतानिरूपित घटिततावदभिन्नः समुदायः। तस्य आधेयतासंबंधेन षष्ठ्यर्थ विषयत्वेऽन्वयः। विषयतायाः निरूपकत्वसंबंधेन व्यवहारशब्दार्थ ज्ञानजनकशब्दप्रयोग इत्येकदेश ज्ञानेऽन्वयः। शब्दप्रयोगस्य आधेयतासंबंधेन षष्ठ्यर्थ कार्यतायामन्वयः। कार्यतायाः निरूपितत्वसंबंधेन हेतुशब्दार्थ कारणतावानित्येकदेश कारणतायामन्वयः। कारणतायाः अभेदसंबंधेन संख्यायां अन्वयः। तथा च एकत्वनिष्ठ घटकतानिरूपित घटिततावदभिन्न समुदायनिष्ठ विषयतानिरूपकज्ञान जनकशब्दप्रयोगनिष्ठ कार्यतानिरूपित कारणतावदभिन्ना संख्या। लक्षणमन्वयः। एकत्वादि व्यवहारे विषयः एकत्वादिः। विषयता एकत्वादिनिष्ठा चेत् व्यवहारः एकत्वादिनिष्ठ विषयतानिरूपको भवति।

या यन्निपिता सा तन्निरूपिका भवति। एकत्वादिनिष्ठ विषयता व्यव हारनिरूपिता चेत् व्यवहारः एकत्वादिनिष्ठ विषयतानिरूपको भवति। एकत्वादिनिष्ठ विषयतानिरूपकः यः व्यवहारः अयमेकः (एकत्ववान्) इमौ द्वौ (द्वित्वसंख्यावन्तौ) इत्यादि व्यवहारः। व्यवहारे व्यवहर्तव्यः एकत्ववान्। व्यवहर्तव्यतावच्छेदकं एकत्ववत्वम्। एकत्वादिव्यवहारं प्रति एकत्वं कारणम्। व्यहारः कार्यम्। कार्यता व्यवहारनिष्ठा। संख्या कारणं कारणता संख्यानिष्टा। तयोः निरूपितत्वं सम्बन्धः। तथा च व्यवहारनिष्ठ कार्यतानिरूपित कारणतावती संख्या। कारण तावदभिन्ना संख्या। अतः एकत्वादिव्यवहारनिष्ठ कार्यतानिरूपित कारणत्वं संख्यायाः लक्षणम्।

संख्यायाः अधिकरणमाह नवेति।

## नवद्रव्यवृत्तिः।

नवानि च तानि द्रव्याणि च नवद्रव्याणि। तेषु वृत्तिः यस्या सा नवद्रव्यवृत्तिः। सप्तम्याः अधिकरणत्वमर्थः। नवद्रव्याणां आधे यतासंबंधेन अधिकरणतायामन्वयः। अधिकरणतायाः निरूपितत्व संबंधेन वृत्तिशब्दार्थ आधेयत्वे अन्वयः। तथा च नवद्रव्यनिष्ठ अधि करणतानिरूपित आधेयत्वम्। यस्याः इत्यत्र षष्ठ्याः आधेयत्वमर्थः। यत्पदार्थस्य स्वनिष्ठ अधिकरणतानिरूपितत्वसंबंधेन आधेयत्वेऽन्वयः। आधेयत्वस्य आश्रयतासंबंधेन नवद्रव्यनिष्ठ अधिकरणतानिरूपित आधे-यत्वेऽन्वयः। तथा च नवद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयत्वं यन्निरूपित आधेयत्वाश्रयः। इति विग्रहवाक्यात् शाब्दबोधः। समास वाक्यात् नवद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयतावती। तस्याः अभेदसंबंधेन अध्याहृत तच्छब्दार्थ संख्यायामन्वयः।

तथा च नवद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्ना संख्या।

# अथ परिमाणनिरूपणम्

अथ परिमाणं निरूपयति मानेति ।

**मानव्यवहारकारणं परिमाणम् ।**

मानस्य व्यवहारः मानव्यवहारः । तस्य हेतुः मानव्यवहारहेतुः : मानस्य इत्यत्र मानशब्दस्य मानमर्थः । मानस्य आधेयता सम्बन्धेन षष्ठ्यर्थं विषयत्वे अन्वयः । विषयतायाः निरूपकत्वसंबंधेन व्यवहार शब्दार्थं ज्ञानजनकशब्दप्रयोग इत्येकदेश ज्ञानेऽन्वयः । शब्दप्रयोगस्य आधेयतासंबंधेन षष्ठ्यर्थं कार्यतायामन्वयः कार्यतायाः निरूपितत्वसंबंधेन कारणतावदित्येकदेश कारणतायामन्वयः । कारणतावतः अभेदसंबंधेन परिमाणेऽन्वयः । तथा च माननिष्ठ विषयतानिरूपक ज्ञानजनकशब्द प्रयोगनिष्ठ कार्यतानिरूपित कारणतावदभिन्नं परिमाणम् ।

परिमाणे लक्षणसमन्वयः । मानव्यवहारकारणत्वं परिमाणस्य लक्षणम् । मानव्यवहारे विषयः अयं अणुः । विषयता माननिष्ठा चेत् व्यवहारः माननिष्ठ विषयतानिरूपको भवति । या यन्निरूपिता सा तन्निपिका भवति इति न्यायात् । माननिष्ठविषयता व्यवहारनिरूपिता चेत् व्यवहारः माननिष्ठविषयता निरूपको भवति । माननिष्ठ विषयता निरूपको यो व्यवहारः अयं अणुः. अयं दीर्घः इत्यादि व्यवहारः । व्यवहारे व्यवहर्तव्यः अणुत्ववान् । व्यवहर्तव्यतावच्छेदकं अणुत्ववत्वम् । अणुत्व व्यवहारं प्रति अणुत्ववत्वं कारणम् । व्यवहारः कार्यम् । कार्यता व्यवहारनिष्ठा । परिमाणं कारणं कारणता परिमाणनिष्ठा । तयोर्निरूपितत्वं संबंधः । तथा च मानव्यवहारनिष्ठ कार्यतानिरूपित कारणतावत्वं परिमाणस्य लक्षणम् ।

तस्य अधिकरणमाह ।

**नवद्रव्यवृत्ति ।**

नवद्रव्येषु वृत्तिः यस्य तत् इति विग्रहः । शाब्दबोधप्रकारस्तु पुर्ववद्बोध्यम् । नवद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नं

परिमाणम् । लक्षणं तु मानव्यहारनिष्ठ कार्यतानिरूपित कारणत्व परिमाणस्य लक्षणम् ।

परिमाणं विभजते ।

## तच्चतुर्विधम् । अणु महद्दीर्घं ह्रस्वं चेति ।

चतस्रः विधाः यस्य तत् चतुर्विघम् । यस्य इत्यत्र यच्छब्दस्य यत्पदार्थोऽर्थः । यत्पदार्थस्य निरूपितत्वसंबंधेन षठ्यर्थं आधेयत्वेऽन्वयः चतस्र पदस्य चतुष्ट्व संख्यापर्याप्त्यधिकरणवर्थः । तस्य अभेदसंबंधेन विघा शब्दार्थ विभाजकघर्मान्यतमेषु अन्वयः । तथा च चतुष्ट्व-संख्यापर्याप्त्यघिकरण विभाजकधर्मान्यतमवन्तः । यन्निरूपित आधेय त्वस्य आश्रयतासंबंधेन विभाजकघर्मान्यतमेष्वन्वयः । तथा च चतुष्ट्व संख्यापर्याप्त्यधिकरण विभाजकघर्मान्यतमवन्तः यन्निरूपित आधेयत्वा श्रयाः इति विग्रहवाक्यजन्यबोधः । समासवाक्यात् चतुष्ट्व संख्या पर्याप्त्यधिकरण विभाजकघर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरण तावत् तस्य अभेदसंबंधेन परिमाणेऽन्वयः । तया च चतुष्ट्व संख्या पर्याप्त्यघिकरण विभाजकधर्मान्यतमनिष्ठ आधेयतानिरूपित अघिकरण तावदभिन्नं परिमाणम् । अणुपदस्य लक्षणया अणुत्वमर्थः । महत्पदस्य लक्षणया महत्वमर्थः । दीर्घपदस्य लक्षणया दीर्घत्वर्थः । ह्रस्वपदस्य लक्षणया ह्रस्वत्वमर्थः । अणुत्वस्य अभेदसंबंधेन एकदेशविभाजकधर्मान्यतमस्मिन्नन्वयः । महत्वस्य अभेदसंबंधेन एकदेश विभाजकधर्मान्यतम-स्मिन्नन्वयः । दीर्घत्वस्य अभेदसंबंधेन एकदेश विभाजकघर्मान्यतम स्मिन्नन्वयः । तथा च अणुत्वाभिन्न महत्वाभिन्न दीर्घत्वाभिन्न ह्रस्व-त्वाभिन्न चतुष्ट्व संख्यापर्याप्त्यघिकरण विभाजकधर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नं परिमाणम् ।

---

# अथ पृथक्त्वनिरूपणम्

अथ पृथक्त्वं निरूपयति ।

**पृथग्व्यवहारकारणं पृथक्त्वम् ।**

पृथगिति व्यवहारः पृथग्व्यवहारः । तस्य कारणं पृथग्व्यवहार कारणम् । पृथक्त्वस्य आधेयतासंबंधेन षष्ठ्यर्थ विषयतायामन्वयः । विषयतायाः निरूपकत्वसंबंधेन व्यवहार शब्दार्थ ज्ञानजनकशब्दप्रयोग इत्येकदेश ज्ञानेऽन्वयः । शब्दप्रयोगस्य आधेयतासंबंधेन कार्यतायामन्वयः । कार्यतायाः निरूपितत्वसंबंधेन कारणतावदित्येकदेश कारणतायामन्वयः । तथा च पृथग्व्यवहारनिष्ठ कार्यतानिरूपित कारणतावत् । तस्य अभेदसंबंधेन पृथक्त्वेऽन्वयः । तथा च पृथक्त्वनिष्ठ विषयतानिरूपक ज्ञानजनकशब्दप्रयोगनिष्ठ कार्यतानिरूपित कारणतावदभिन्नं पृथक्त्वम् । पृथक्त्वे लक्षणसमन्वयः पृथग्व्यवहारनिष्ठ कार्यतानिरूपित कारणत्वं पृथक्त्वस्य लक्षणम् । पृथग्व्यवहारे यः विषयः पृथक्त्ववान् विषयः । विषयता पृथक्त्ववन्निष्ठा चेत् व्यवहारः पृथक्त्ववन्निष्ठ विषयतानिरूपको भवति । व्यवहारे व्यवहर्तव्यः पृथक्त्ववान् , व्यवहर्तव्यतावच्छेदकं पृथक्त्वम् । व्यवहारं प्रति पृथक्त्वं कारणं कारणता पृथक्त्ववन्निष्ठा । व्यवहारः कार्यम् । कार्यता व्यवहारनिष्ठा । तयोः निरूपितत्वं संबंधः । तथा च पृथग्व्यवहारनिष्ठ कार्यतानिरूपित कारणतावत् पृथक्त्वम् । अयमस्मात् पृथक् इति व्यवहारं प्रति पृथक्त्वं कारणम् । कारणत्वं पृथक्त्वे वर्तते इति लक्षणसमन्वयः ।

पृथक्त्वस्य अधिकरणमाह सर्वेति ।

**सर्वद्रव्यवृत्ति ।**

सर्वद्रव्येषु वृत्तिः यस्य तत् । सप्तम्याः अधिकरणत्वं अर्थः । सर्वद्रव्याणां आधेयतासंबंधेन अधिकरणतायामन्वयः । अधिकरणतायाः निरूपितत्वसंबंधेन वृत्ति शब्दार्थ आधेयतायामन्वयः । तथा च सर्व द्रव्यनिष्ठ अधिकरणतानिरूपित आधेयत्वम् । यस्य इत्यत्र यच्छब्दस्य यत्पदार्थोऽर्थः । यत्पदार्थस्य निरूपितत्वसंबंधेन षष्ठ्यर्थ आधेयत्वेऽन्वयः ।

आधेयत्वस्य आश्रयतासंबंधेन सर्वद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयत्वे अन्वयः। तथा च सर्वद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयत्वं यन्निरूपित आधेयत्वाश्रयः इति बिग्रहवाक्यात् शाब्दबोधः। समास वाक्यात् तु सर्वद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयतावत्। तस्य अभेदसंबंधेन पृथक्त्वेऽन्वयः। तथा च सर्वद्रव्यनिष्ठ अधिकरणता निरूपित आधेयतावदभिन्नं पृथक्त्वम्।

# अथ संयोगनिरूपणम्

संयोगं निरूपयति।

**संयुक्तव्यवहारहेतुः संयोगः।**

संयुक्तस्य व्यवहारः संयुक्तव्यवहारः। तस्य हेतुः संयुक्तव्यवहारहेतुः। संयुक्तस्य आधेयतासंबंधेन षष्ठयर्थ विषयतायामन्वयः। विषयतायाः निरूपकत्वसंबंधेन व्यवहार शब्दार्थ ज्ञानजनकशब्दप्रयोग इत्येकदेश ज्ञानेऽन्वयः। शब्दप्रयोगस्य आधेयतासंबंधेन षष्ठयर्थ कार्यतायामन्वयः। कार्यतायाः निरूपितत्वसंबंधेन हेतुशब्दार्थ कारणताव-दित्येकदेश कारणतायां अन्वयः। कारणतावतः अभेदसंबंधेन संयोगेऽन्वयः। तथा च संयुक्तनिष्ठ विषयता निरूपक ज्ञानजनक शब्दप्रयोग निष्ठ कार्यतानिरूपित कारणतावदभिन्नः संयोगः। अथ लक्षणसमन्वयः। संयुक्त इति व्यवहारे विषयः संयुक्तः। विषयता संयुक्तनिष्ठा चेत् व्यवहारः संयुक्तनिष्ठविषयतानिरूपको भवति। संयुक्तनिष्ठ विष-यतानिरूपकः यो व्यवहारः। अयमस्मात्संयुक्त इत्यादि व्यवहारः। व्यवहारं प्रति संयुक्तत्वं कारणम्। तन्निष्ठा कारणता। व्यवहारः कार्यम्। तन्निष्ठा कार्यता। तयोः निरूपितत्वं संबंधः। तथा च संयुक्तनिष्ठ विषयतानिरूपक ज्ञानजनक शब्दप्रयोगनिष्ठ कार्यतानिरू-पित कारणतावान् संयोगः। कारणतावतः अभेदसंबंधेन संयोगेऽन्वयः। तथा च संयुक्तनिष्ठ विषयतानिरूपक ज्ञानजनक शब्दप्रयोगनिष्ठ कार्यतानिरूपित कारणतावदभिन्नः संयोगः।

संयोगस्य अधिकरणमाह ।

**सर्वद्रव्यवृत्तिः ।**

सर्वद्रव्येषु वृत्तिः यस्य सः । सर्वद्रव्याणां आधेयतासंबंधेन सप्तम्यर्थ अधिकरणतायामन्वयः । अधिकरणतायाः निरूपितत्वसंबंधेन वृत्तिशब्दार्थ आधेयत्वेऽन्वयः । सर्वद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयत्वम् । यस्य इत्यत्र यन्निरूपित आधेयत्वं इति शाब्दबोधः । आधेयत्वस्य आश्रयतासंबंधेन यन्निरूपित आधेयत्वे अन्वयः । तथा च सर्वद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयत्वं यन्निरूपित आधेयत्वाश्रयः इति विग्रहवाक्यजन्यशाब्दबोधः । समासवाक्यात्तु सर्वद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयतावान् । तस्य अभेदसंबंधेन संयोगे अन्वयः । तथा च सर्वद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नः संयोगः ।

# अथ विभागनिरूपणम्

अथ क्रमप्राप्तं विभागं लक्षयति ।

**संयोगनाशको गुणो विभागः ।**

संयोगस्य नाशकः संयोगनाशकः । संयोगस्य आधेयतासम्बन्धेन षष्ठयर्थ प्रतियोगितायामन्वयः । प्रतियोगितायाः निरूपकत्वसम्बन्धेन नाश शब्दार्थ ध्वंसेऽन्वयः । ध्वंसस्य स्वनिष्ठजन्यता निरूपितत्वसम्बन्धेन ण्वुल् प्रत्ययार्थ जनकतावान् इत्येकदेश जनकतायामन्वयः । जनकतावतः अभेदसम्बन्धेन विभागेऽन्वयः । तथा च संयोगनिष्ठ प्रतियोगितानिरूपक ध्वंसनिष्ठ जन्यतानिरूपित जनकतावदभिन्नः विभागः । गुणस्य अभेदसंबंधेन विभागेऽन्वयः । तथा च संयोग निष्ठ प्रतियोगितानिरूपक ध्वंसनिष्ठ जन्वतानिरूपित जनकतावदभिन्नः गुणाभिन्नः विभागः ।

विभागे लक्षणसमन्वयः । संयोगनिष्ठ जन्यतानिरूपित जनकत्वे सति गुणत्वं विभागस्य लक्षणय् । विभागेन संयोगस्य नाशो भवति । अतः संयोगनाशं प्रति विभागः जनकः । जनकता विभागनिष्ठा ।

संयोगनाशः जन्यः । जन्यता संयोगनाशनिष्ठा तयोर्निरूपितत्वं संबंधः। तथा च संयोगनाशनिष्ठ जन्यतानिरूपित जनकतावान् विभागः। तस्य अभेदसंबंधेन विभागेऽन्वयः । तथा च संयोगनाशनिष्ठ जन्यता निरूपित जनकतावदभिन्नः विभागः । इति लक्षणसमन्वयः ।

गुणत्वं विभागस्य लक्षणमित्युक्ते रूपादीनामपि गुणत्वात् तत्रातिव्याप्तिः । अतः लक्षणे सत्यन्तं निवेशनीयं रूपादौ संयोगनाश कत्वं नास्तीति नातिव्याप्तिः । संयोगनाशकत्वं विभागस्य लक्षण मित्येवोक्ते संयोगेऽतिव्याप्तिः । ध्वंसं प्रति प्रतियोगिनः कारणत्वात् संयोगनाशं प्रति संयोगस्य कारणत्वेन तत्र अतिव्याप्तिः । अतः गुणत्वं लक्षणे निवेशनीयं तत्र गुणत्वाभावात् नातिव्याप्तिः ।

विभागस्य अधिकरणमाह ।

**सर्वद्रव्यवृत्तिः ।**

शाब्दबोधप्रकारस्तु पूर्ववद्बोध्यम् । सर्वद्रव्यनिष्ठ अधिकरणता निरूपित आधेयतावदभिन्नः वियोगः ।

# अथ परत्वापरत्वनिरूपणम्

परापरत्वे युगपन्निरूपयति ।

**परापरव्यवहारासाधाराणकारणे परत्वापरत्वे ।**

परं च अपरं च परापरे । परापर इति व्यवहारः परापर– व्यवहारः तस्य असाधारणे कारणे परापरासाधारण कारणे। (असाधारणंच तत् कारणंच) इति विग्रहः ।

अत्र शाब्दबोधप्रकारस्तु इत्थम् । इतिपद समभिव्याहृत परापर शब्दस्य ज्ञानजनक शब्दप्रयोग इत्यर्थः । परापरनिष्ठ विषयतानिरू पकत्वस्य आश्रयता संबंधेन ज्ञानजनक शब्दप्रयोग इत्येकदेश ज्ञानेऽन्वयः ।

व्यवहारस्य इत्यत्र षःष्ठ्याः कार्यत्वमर्थः । शब्दप्रयोगस्य आधेयता संबंधेन षष्ट्यर्थ कार्यतायामन्वयः । कार्यतायाः निरूपित

त्वसंबंधेन असाधारण कारणवदित्येकदेश कारणतायां अन्वयः। कारणतावतोः अभेद संबंधेन परत्वापरत्वयोः अन्वयः। तथाच परापरनिष्ठ विषयता निरूपकत्वाश्रय ज्ञानजनकशब्दप्रयोगनिष्ठ कार्यतानिरूपित कारणतावदभिन्ने परत्वापरत्वे।

इदं खलु लक्षणवाक्यम् अनेन वाक्येन परत्वापरत्वयोः लक्षण मुच्यते। तत्किमिति चेत् परापरनिष्ठ विषयता निरूपक ज्ञानजनक शब्दप्रयोगनिष्ठ कार्यता निरूपित कारणतावत्वं परत्वापरत्वयो र्लक्षणम्। चैत्रः मैत्रात्परः मैत्रः चैत्रादपरः इत्याकारक व्यवहारो जायते। तादृश व्यवहारे विषयः परापरे। विषयता परापरनिष्ठा परापरनिष्ठा यिषयता किंनिरूपिता व्यवहारनिरूपिता चेत् व्यवहारः परापरनिष्ठ विषयता निरूपको भवति। कुतः इति चेत् या यन्निरूयिता सा तन्निरूपिका भवति इति न्यायात्। तथा च परा परनिष्ठ विषयता निरूपको यो व्यवहारः चैत्रः मैत्रात्परः मैत्रः चैत्रादपरः इत्याकारक व्यवहारः तादृश व्यवहारं प्रति कारणे पर त्वापरत्वे। कारणता परत्वापरत्वनिष्ठा। कार्यं व्यवहारः कार्यता व्यवहारनिष्ठा तयोः निरूपितत्व संबंधः इति लक्षण समन्वयः।

**पृथिव्यादि चतुष्टयमनोवृत्तिनी। ते द्विविधे। दिक्कृते कालकृते चेति। दूरस्थे दिक्कृतं परत्वं। समीपस्थे दिक्कृतं अपरत्वं। ज्येष्ठे कालकृतं परत्वं कनिष्ठे कालकृतं अपरत्वं।**

पृथिवी आदी यस्य तत् पृथिव्यादि। पृथिव्यादि च तत् चतुष्टयं च पृथिव्यादि चतुष्टयं। पृथिव्यादि चतुष्टयं च मनश्च पृथिव्यादिचतुष्टयमनांसि। पृथिव्यादि चतुष्टयमनस्सु वृत्तिः ययोस्ते पृथिव्यादिचतुष्टयमनोवृत्तिनी इति विग्रहः। पृथिव्यादि चतुष्टयमनस्सु इत्यत्र सप्तम्याः अधिकरणत्वमर्थः। पृथिव्यादि चतुष्टयमनसां आधेयता संबंधेन अधिकरणतायां अन्वयः। पृथिव्यादिचतुष्टयमनो निष्ठ अधिकरणता। वृत्ति शब्दस्य आधेयत्वमर्थः। अधिकरणतायां

निरूपितत्व संबंधेन आधेयत्वेऽन्वयः। आधेयत्वस्य अभेद संबंधेन परत्वापरत्वयोरन्वयः। द्विविधे इत्यत्र शाब्दबोधस्तु पूर्ववत्।

तथाच पृथिव्यादिचतुष्टयमनोनिष्ठ अधिकरणतानिरूपित आधेयता वदभिन्ने परत्वापरत्वे दिक्कृत परत्वापरत्वाभिन्न कालकृत परत्व अपरत्वाभिन्न द्वित्वसंख्या पर्याप्त्यधिकरण विभाजक धर्मनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्ने।

# अथ गुरुत्वनिरूपणम्

गुरुत्वं लक्षयति आद्येति

**आद्यपतनासमवायिकरणं गुरुत्वम्।**

आद्यं च तत् पतनंच आद्यपतनं। तस्य असमवायिकारणं आद्यपतनासमवायिकारणम्। आद्यशब्दस्य आद्यमर्थः। पतनशब्दस्य पतनमर्थः। आद्यस्य अभेद संबंधेन पतनेऽन्वयः। तथाच आद्या भिन्नपतनं। आद्यपतनस्य इत्यत्र षष्ठ्याः आधेयत्वमर्थः। आद्य पतनस्य निरूपितत्व संबंधेन आधेयत्वेऽन्वयः। असमवायिकारण शब्दस्य समवाय संबंधावच्छिन्न कार्यता निरूपित समवायसंबंधा वच्छिन्न कारणतावत् इत्यर्थः। आधेयत्वस्य आश्रयता संबंधेन एकदेश कार्यतायामन्वयः। तस्य अभेद संबंधेन गुरुत्वे अन्वयः। तथा च आद्याभिन्नपतन निरूपित आधेयत्वाश्रय समवाय संबंधावच्छिन्न कार्यतानिरूपित समवायसंबंधावच्छिन्न कारणतावदभिन्नं गुरुत्वम्।

इदं खलु लक्षणवाक्यं। अनेन वाक्येन गुरुत्वस्य लक्षणमुच्यसे तत्किमिति चेत् आद्यपतननिष्ठ समवायसंबंधावच्छिन्न कार्यतानिरूपित समवायसंबंधावच्छिन्न कारणत्वं गुरुत्वस्य लक्षणम्। गुरुत्वे लक्षण समन्वयः। तत्कथमिति चेत् फले समवायसंबंधेन आद्यपतनं प्रति गुरुत्वं समवाय संबंधेन कारणम्। कार्यता आद्यपतननिष्ठा। कारणता गुरुत्वनिष्ठा तयोर्निरूपितत्वं संबंधः।

अतः समवायसंबंधावच्छिन्न आद्यपतननिष्ठ समवायसंबंधावच्छिन्न कारणत्वं गुरुत्वे वर्तते इति लक्षणसमन्वयः।

अत्र लक्षणे आद्यत्वानिवेशे वेगेऽतिव्याप्तिः। कथमिति चेत् द्वितीयादिपतनं प्रति वेगस्य कारणत्वेन वेगेऽतिव्याप्तिः अतः पतने आद्यपदं निवेशनीयम्। आद्यपतनं प्रति वेगस्य कारणत्वाभावान्नातिव्याप्तिः।

कारणतायां समवायसंबंधावच्छिन्नत्वानिवेशे समवायिकारणे फले अतिव्याप्तिः। तत्कथमिति चेत् समवायसंबंधेन आद्यपतनं प्रति फलस्य तादात्म्य संबंधेन कारणत्वेन समवायसंबंधावच्छिन्न आद्यपतननिष्ठ समवायसंबंधावच्छिन्न कार्यतानिरूपित तादात्म्यसंबंधावच्छिन्न कारणतायाः फले सत्वादतिव्याप्तिः। अत कारणतायां समवायसंबंधावच्छिन्नत्वम् निवेशनीयम्। इदानीं न अतिव्याप्तिः। समवायसंबंधेन आद्यपतनं प्रति फलस्य तादात्म्यसम्बन्धेन कारणत्वेऽपि समवायसंबंधेन कारणत्वाभावान्नातिव्याप्तिः।

गुरुत्वस्य अधिकरणमाह।

**पृथिवीजलवृत्ति**

पृथिवीजलनिष्ठ अधिकरणता निरूपित आधेयतावदभिन्नं गुरुत्वम्।

# अथ द्रवत्वनिरूपणम्

द्रवत्वं लक्षयति। आद्येति

**आद्यस्यन्दनासामवायिकरणं द्रवत्वम्।**

आद्यं च तत् स्यंदनं च आद्यस्यंदनम्। तस्य असमवायिकरणंत्वम्। इति विग्रहः।

आद्य शब्दस्य आद्यमर्थः। स्यंदन शब्दस्य स्यंदनमनर्थः। आद्यस्याभेदसंबंधेन स्यंदनेऽन्वयः। आद्याभिन्नस्यंदनम्। षष्ठ्याः आधेयत्वमर्थः। आद्याभिन्नस्यंदनस्य निरूपितत्वसंबंधेन आधेयत्वेऽन्वयः। आद्याभिन्नस्यंदननिरूपित आधेयत्वम्।

असमवायिकारण शब्दस्य समवायसंबंधावच्छिन्न कार्यतानिरूपित समवायसंबंधावच्छि कारणत्वमर्थः । आधेयत्वस्य आश्रयतासंबंधेन समवायसंबंधावच्छिन्न कार्यतानिरूपित समवायसंबंधावच्छिन्न कारणत्वेऽन्वयः । कारणतायाः अभेदसंबंधेन द्रव्यत्वेऽन्वयः । तथा च आद्य-स्यंदननिरूपित आधेयत्वाश्रय समवायसंबंधावच्छिन्न कार्यतानिरूपित समवायसंबंधावच्छिन्न कारणतावदभिन्नं द्रवत्वम् ।

द्रवत्वे लक्षणसमन्वयः । जले समवायसंबंधेन आद्यस्यंदनं प्रति द्रवत्वं समवायसम्बन्धेन कारणम् । आद्यस्यन्दनं कार्यम् । कार्यता आद्यस्यन्दननिष्ठा कारणं द्रवत्वम् । कारणता द्रवत्वनिष्ठा । तयो-र्निरूपितत्वं सम्बन्धः ।

अतः समबायसम्बन्धावच्छिन्न आद्यस्यन्दननिष्ठ समवायसम्बन्धावच्छिन्न कारणत्वं द्रवत्वे वर्तते इति लक्षणसमन्वयः ।

अत्र लक्षणे स्यन्दने आद्यत्वानिवेशे वेगेऽतिव्याप्तिः । तत्कथमिति चेत् द्वितीयादि स्यन्दनं प्रति वेगस्य का।णत्वात् अतिव्याप्तिः । अतः स्यन्दने आद्यत्वं निवेशनीयम् । आद्यस्यन्दनं प्रति वेगस्य कारणत्वाभावात् नातिव्याप्तिः ।

कारणतायां समवायसम्बन्धावच्छिन्नत्वानिवेशे समवायिकारणे जले अतिव्याप्तिः । तत्कथमिति चेत् समवायसम्बन्धेन आद्यस्यन्दनं प्रति जलस्य तादात्म्यसम्बन्धेन कारणत्वेन अतिव्याप्तिः । अतः कारणतायां समवायसम्बन्धावच्छिन्नत्वं निवेशनीयम् । इदानीं नातिव्याप्तिः। समवायसम्बन्धावच्छिन्न आद्यस्यन्दनं प्रति जलस्य तादात्म्य सम्बन्धेन कारणत्वेऽपि समवायसम्बन्धेन कारणत्वाभावात् ।

तस्य अधिकरणमाह ।

**पृथिवीजलतेजोवृत्तिः ।**

पृथिवीजलतेजोनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नं द्रवत्वम् ।

**तद्विविधम् । सांसिद्धिकं नैमित्तिकं चेति । सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादौ अग्निसंयोगजं द्रवत्वं । तेजसि सुवर्णादौ ।**

शाब्दबोधस्तु इत्थम् । जलनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नं सांसिद्धिकद्रवत्वम् । पृथिवी तेजोनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नं नैमित्तिकं द्रवत्वम् ।

पृथिव्यभिन्न घृतादिनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नं नैमित्तिकं द्रवत्वम् ।

तेजोभिन्न सुवर्णनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नं नैमित्तिक द्रवत्वम् ।

# अथ स्नेहनिरूपणम्

## चूर्णादि पिंडीभावहेतुर्गुणः स्नेहः ।

चूर्णादीनां पिंडीभावः तस्य हेतुः इति विग्रहः । चुर्णादीनाँ इत्यत्र षष्ठ्याः आधेयत्वमर्थः । पिंडीभावेत्यत्र पिंडीभावोऽर्थः । चूर्णादीनां आधेयतासम्बन्धेन पिंडीभावेऽन्वयः । पिंडीभावस्य इत्यत्र षष्ठ्याः कार्यत्वमर्थः । चूर्णादिनिष्ठ पिंडीभावस्य आधेयतासम्बन्धेन षष्ठ्यर्थ कार्यतायामन्वयः । कार्यतायाः निरूपितत्वसम्बन्धेन हेतु शब्दार्थ कारणतावान् इत्येकदेश कारणतायामन्वयः । कारणतावतः अभेदसम्बन्धेन स्नेहेऽन्वयः । गुणस्यापि अभेदसम्बन्धेन स्नेहेऽन्वयः । तया च चूर्णादिनिष्ठ पिंडीभावनिष्ठ कार्यतानिरूपित कारणतावदभिन्नः गुणाभिन्नः स्नेहः ।

इदं खलु लक्षणवाक्यम् । अनेन वाक्येन स्नेहस्य लक्षणमुच्यते। चूर्णादि पिंडीभावनिष्ठ कार्यतानिरूपित कारणत्वे सति गुणत्वं स्नेहस्य लक्षणम् । स्नेहे लक्षणसमन्वयः । तत्कथमिति चेत् चूर्णादि पिंडी भावं प्रति कारणं स्नेहः । पिंडीभावः कार्यः । कारणता स्नेहनिष्ठा । कार्यता पिंडीभावनिष्ठा तयोर्निरूपितत्वं सम्बन्धः । तथा च चूर्णादि पिंडीभावनिष्ठ कार्यतानिरूपित कारणतावत्वं स्नेहे सत्वाल्लक्षण समन्वयः ।

अत्र विशेषणमात्रोक्तौ कालेश्वरेच्छादावतिव्याप्तिः। ईश्वरेच्छादीनां कार्यसामान्यं प्रति कारणत्वेन पिंडीभावरूपकार्यं प्रति ईश्वरेच्छादीनां कारणत्वेन पिंडीभावनिष्ठ कार्यतानिरूपित कारणतावत्वं ईश्वरेच्छादौ सत्वात् अतिव्याप्तिः। अतः गुणत्वोपादानम्। अत्र गुणत्वाभावान्नातिव्याप्तिः। गुणत्वमात्रोक्तौ रूपादावतिव्याप्तिः। अतः विशेषणं देयं रूपादीनां चूर्णादिपिंडीभावं प्रति अकारणत्त् नातिव्याप्तिः।

### जलमात्रवृत्तिः।

जल एव जलमात्रम्। जलमात्रे वर्तते इति जलमात्रवृत्तिः। शाब्दबोधप्रकारस्तु इत्थम्। जलनिष्ठ प्रतियोगितानिरूपक भेदवन्निष्ठ प्रतियोगितानिरूपक संबंधनिष्ठ प्रतियोगितानिरूपक अभावाश्रयजलनिष्ठ अधिकरणतानिरूपक आधेयतावदभिन्नः स्नेहः।

# अथ शब्दनिरूपणम्

### श्रोत्रग्राह्यो गुणः शब्दः।

श्रोत्रेण ग्राह्यः श्रोत्रग्राह्यः। श्रोत्रेण इत्यत्र तृतीयायाः जन्यत्व मर्थः ग्रहधातोर्ज्ञानमर्थः। श्रोत्रस्य स्वनिष्ठजनकता निरूपित्वसंबंधेन जन्यत्वेऽन्वयः। जन्यत्वस्य आश्रयतासंबंधेन ग्रहधात्वर्थ ज्ञानेऽन्वयः। ण्वुल् प्रत्ययस्य विषयतावानित्यर्थः। ज्ञानस्य निरूपितत्वसंबंधेन विषयतावदित्येकदेश विषयतायां अन्वयः। विषयतायाः अभेदसंबंधेन शब्देऽन्वयः। गुणस्य अभेदसंबंधेन शब्देऽन्वयः। तथा च श्रोत्रनिष्ठ जनकतानिरूपित जन्यत्वाश्रय विषयतावदभिन्नः गुणाभिन्नः शब्दः।

इदं खलु लक्षणवाक्यम्। अतेन वाक्येन शब्दस्य लक्षणमुच्यते। तत्किमिति चेत् श्रोत्रेंद्रियनिष्ठ जनकतानिरूपित जन्यत्वाश्रय ज्ञाननिरूपित विषयत्वे सति गुणत्वं शब्दस्य लक्षणम्। शब्दे लक्षणसमन्वयः। तत्कथमिति चेत् श्रोत्रेंद्रियेण शब्दज्ञानं जायते। अतः श्रौत्रेंद्रियं जनकम्। शब्दज्ञानं जन्यम्। जन्यता शब्दज्ञाननिष्ठा। जनकता श्रोत्रेंद्रियनिष्ठा। तयोः निरूपितत्वं संबंधः। तथा च श्रोत्रेंद्रियनिष्ठ

**जनकतानिरूपित** जन्यत्वाश्रयः यज्ज्ञानं शब्दज्ञानम्। ज्ञाने विषयः **शब्दः।** विषयत्वमपि शब्दे वर्तते गुणत्वमपि वर्तते इति लक्षणसमन्वयः।

गुणत्वं शब्दस्य लक्षणमित्येवोक्तौ रूपादावतिव्याप्तिः। अतः **विशेषणं देयम्।** रूपादौ श्रोत्रेंद्रियजन्यज्ञानविषयत्वाभावान्नातिव्याप्तिः।

तावन्मात्रोक्तौ गुणत्वानुपादाने शब्दत्वेतिव्याप्तिः येनेंद्रियेण या व्यक्तिर्गृह्यते तेनेंद्रियेण तन्निष्ठा जातिः तदभावश्च गृह्यते इति नियमात् श्रोत्रेंद्रियेण यथा शब्दज्ञानं तथा शब्दत्वज्ञानमपि जायते अतः श्रोत्रेंद्रियजन्य ज्ञानविषयत्वं शब्दत्वेऽपि वर्तते इति अतिव्याप्तिः। अतः गुणत्वोपा दानम्। शब्दत्वस्य जातिरूपत्वात् गुणत्वाभावान्नातिव्याप्तिः।

**आकाशमात्रवृत्तिः।**

आकाशनिष्ठ प्रतियोगितानिरूपक भेदवन्निष्ठ प्रतियोगितानिरूपक संबंधनिष्ठ प्रतियोगितानिरूपक अभावाश्रय आकाशनिष्ठ अधिकरणता निरूपित आधेयतावदभिन्नः शब्दः।

**सः द्विविधः ध्वन्यात्मको वर्णात्मकश्चेति।**

ध्वन्यात्मकत्व वर्णात्मकत्वाभिन्न द्वित्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतरनिष्ठ आधेयततानिरूपित अधिकरणतावदभिन्नः शब्दः।

**ध्वन्यात्मको भेर्यादौ। वर्णात्मको संस्कृतभाषादिरूपः।**

# अथ बुद्धिनिरूपणम्

अथ बुद्धि निरूपयति सर्वेति।

**सर्वव्यवहारहेतुः ज्ञानं बुद्धिः।**

सर्वे चते व्यवहाराश्च सर्वव्यवहाराः, तेषां हेतुः। सर्वव्यवहार हेतुः। सर्वव्यवहारशब्दस्य सर्वव्यवहाराः अर्थः। षष्ठ्याः कार्यता अर्थः। सर्वव्यवहाराणां आधेयता संबंधेन कार्यताभामन्वयः। तथाच सर्वव्यवहारनिष्ठ कार्यता। हेतुशब्दस्य कारणतावतीति अर्थः। सर्व व्यवहारनिष्ठ कार्यतायाः निरूपितत्वसंबंधेन कारणतावतीत्येकदेश कारणतायामन्वयः। तस्याः अभेद संबंधेन बुद्धौ अन्वयः। ज्ञानस्य

अभेद संबंधेन बुद्धौ अन्वयः। तथाच सर्वव्यवहारनिष्ठ कार्यता निरूपित कारणतावदभिन्ना बुद्धिः ज्ञानाभिन्ना।

बुद्धिं विभजते सेति।

**सा द्विविधा स्मृतिरनुभवश्चेति।**

द्वेविधे यस्याः सा द्विविधा। द्वित्शब्दस्य द्विवसंख्यापर्याप्त्य धिकरणे अर्थः। विधा शब्दस्य विभाजक धर्मों अर्थः। द्वित्वसंख्या पर्याप्त्याधिकरणयोः अभेद संबंधेन विभाजकधर्मयोरन्वयः। तथाच द्वित्वसंख्या पर्याप्त्यधिकरणाभिन्न विभाजकधर्मान्यतरत्।

यस्य इत्यत्र यच्छब्दस्य यत्किञ्चिद्वस्तु अर्थः। तस्य स्वनिष्ठ अधिकरणता निरूपितत्व संबंधेन षष्ठ्यर्थ-आधेयत्वेऽन्वयः। आधेय त्वस्य आश्रयतासंबंधेन विभाजकधर्मयोरन्वयः।

तथा च द्वित्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतरे यन्निरू पित आधेयत्वाश्रयम्। इति विग्रहवाक्यात् शाब्दबोधः। समास वाक्यात् द्वित्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावती तस्याः अभेदसंबंधेन बुद्धौ अन्वयः।

स्मृति शब्दस्य लक्षणया स्मृतित्वमर्थः। अनुभवपदस्य अनुभ- वत्वमर्थः। स्मृतित्वस्य अभेदसंबंधेन विभाजकधर्मान्यतरस्मिन्नन्वयः अनुभवत्वस्य अभेदसंबंधेन विभाजकधर्मान्यतरस्मिन्नन्वयः। एवं च स्मृतित्वाभिन्न अनुभवत्वाभिन्न द्वित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतरनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्ना बुद्धिः। इत्यखण्डशाब्दबोधः।

# अथ स्मृतिनिरूपणम्

अथ स्मृतिं निरूपयति संस्कारेति।

**संस्कारमात्रजन्यं ज्ञानं स्मृतिः।**

संस्कार एव संस्कारमात्रम्। तेन जन्यं संस्कारमात्रजन्यम्। संस्कारमात्रेण इत्यत्र तृतीयायाः जनकता अर्थः। संस्कारमात्रस्य

आधेयतासंबंधेन जनकतायामन्वयः । तथा च संस्कारमात्रनिष्ठजनकता । जन्य शब्दस्य जन्यतावती अर्थः । संस्कारमात्रनिष्ठ जनकतायाः निरूपितत्वसंबंधेन जन्यतावदित्येकदेश जन्यतायामन्वयः । तस्याः अभेदसंबंधेन ज्ञानेऽन्वयः । ज्ञानस्याभेदसंबंधेन स्मृतौ अन्वयः । तथा च संस्कारमात्रनिष्ठ जनकतानिरूपित जन्यतावदभिन्ना ज्ञानभिन्ना स्मृतिः । इदं खलु लक्षणवाक्यम् । अनेन वाक्येन स्मृतेर्लक्षणमुच्यते ।

संस्कारेतराजन्यत्वे सति संस्कारजन्यत्वे सति ज्ञानत्वं स्मृतेः लक्षणम् ।

दलकृत्यं– ज्ञानत्वं स्मृतेर्लक्षणमित्युक्ते अनुभवेऽतिव्याप्तिः । अनुभवस्यापि ज्ञानत्वात् । अतः तद्वारणाय संस्कारजन्यत्वं लक्षणे निवेशनीयम् । अनुभवत्वस्य इंद्रियजन्यत्वेन संस्कारजन्यत्वाभावान्नाति व्याप्तिः । संस्कारजन्यत्पं स्मृतेः लक्षणं इत्युक्ते संस्कारध्वंसेऽति-व्याप्तिः । ध्वंसं प्रति प्रतियोगिनः कारणत्वेन संस्कारध्वंसं रति संस्कारस्य कारणत्वात् संस्कारध्वंसस्य संस्कारजन्यत्वेन अतिव्याप्तिः इति चेन्न ज्ञानत्वं लक्षणे निवेशनीयम् । ध्वंसे ज्ञानत्वाभावान्नाति व्याप्तिः । संस्कारजन्यत्वे सति ज्ञानत्वं स्मृतेर्लक्षणमित्युक्ते प्रत्यभि-ज्ञायां अतिव्याप्तिः प्रत्यभिज्ञायाः संस्कारजन्य वात् ज्ञानत्वाच्च । अतः संस्कारेतराजन्यत्वं लक्षणे देयम् । प्रत्यभिज्ञायाः संस्कारेतरें द्रियजन्यत्वात् संस्कारेतराजन्यत्पं नास्तीति नातिव्याप्तिः ।

# अथानुभवनिरूपणम्

अथ अनुभवं निरूपयति ।

**तद्भिन्नं ज्ञानमनुभवम् ।**

तस्माद्भिन्नं तद्भिन्नम् । तस्मादित्यत्र तच्छब्दस्य स्मृतिरर्थः । पञ्चम्याः प्रतियोगित्वमर्थः । स्मृतेराधेयतासंबंधेन प्रतियोगितायामन्वयः । तथा च स्मृतिनिष्ठ प्रतियोगिता । भिन्न शब्दस्य भेदवानर्थः । स्मृतिनिष्ठप्रतियोगिताया निरूपकत्वसंबंधेन भेदवदित्येकदेश भेदेऽन्वयः ।

तथा च स्मृतिनिष्ठप्रतियोगितानिरूपकभेदवान् भेदवतः अभेदसंबंधेन अनुभवेऽन्वयः। अनुभवस्य अभेदसंबंधेन ज्ञानेऽन्ववः। तथा च स्मृतिनिष्ठप्रतियोगितानिरूपक भेदवदभिन्नं ज्ञानं अनुभवाभिन्नम्।

स्मृतिभिन्नत्वे सति ज्ञानत्वं अनुभवस्य लक्षणम्। ज्ञानत्वमात्रोक्तौ स्मृतावतिव्याप्तिः। स्मृतेरपि ज्ञानत्वात्। अतः अतिव्याप्तिः इति चेन्न। अतः लक्षणे स्मृतिभिन्नत्वं निवेशनीयम्। स्मृतेः स्मृतिभिन्नत्वाभावान्नातिव्याप्तिः। स्मृतिमिन्नत्वमात्रोक्तौ घटपटादिषु अतिव्याप्तिः। घटपटादेरपि स्मृतिभिन्नत्वात्। अतः ज्ञानत्वं लक्षणे निवेशनीयम्। घटपटादिषु ज्ञानत्वाभावान्नातिव्याप्तिः।

अनुभवं विभजते स इति।

## सः द्विविधः यथार्थोऽयथार्थश्चेति।

द्वे विधे यस्य सः द्विविधः। द्विशब्दस्य द्वित्वसंख्यापर्याप्त्यधिकरणौ अर्थः। विधा शब्दस्य विभाजकधर्मान्यतरौ अर्थः। द्वित्व संख्यापर्याप्त्यधिकरणस्य अभेदसंबंधेन विभाजकधर्मान्यतरयोरन्वयः। तथा च द्वित्वसंख्यापर्याप्त्यधिणाकरभिन्न विभाजकधर्मान्यतरौ। यस्य इत्यत्र यच्छब्दस्य यत्किञ्चिद्वस्तु अर्थः। यत्किञ्चिद्वस्तुनः स्वनिष्ठ अधिकरणतानिरूपितत्वसंबंधेन आधेयत्वेऽन्वयः। तथा च यन्निष्ठ अधिकरणतानिरूपित आधेयत्वम्। तस्य आश्रयतासंबंधेन विभाजक धर्मयोरन्वयः। तथा च द्वित्वसंख्यापर्याप्त्यधिकरणाभिन्नविभाजकधर्मौ यन्निरूपित आधेयत्वाश्रयौ। इति विग्रहवाक्यात् शाब्दबोधः। समास वाक्यात् द्वित्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावान्। तस्य अभेदसंबंधेत अनुभवेऽन्वयः। तथा च द्वित्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्नः अनुभवः।

यत्पदार्थस्य लक्षणया यथार्थानुभवत्वमर्थः। अयथार्थपदस्य लक्षणया अयथार्थानुभवत्वमर्थः। यथार्थानुभवत्वस्य अभेदसंबंधेन विभाजकधर्मान्यतरस्मिन् अन्वयः। अयथार्थानुभवत्वस्य अभेदसंबंधेन विभाजक

धर्मान्यतरस्मिन्नन्वयः । तथा च यथार्थानुभवत्वाभिन्न अयथार्थानुभवत्वाभिन्न द्वित्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्नः अनुभवः ।

# अथ यथार्थानुभवनिरूपणम्

अथ यथार्थानुभवं निरूपयति ।

**तद्वति तत्प्रकारकानुभवो यथार्थः ।**

स अस्मिन्नस्तीति तद्वान् । तस्मिन् तद्वति । सः एत्यत्र तच्छब्दस्य तद्धर्मोऽर्थः । यस्मिन्नित्यत्र इदं शब्दस्य यत्किञ्चिद्वस्तु अर्थः । तस्य आधेयतासंबंधेन सप्तम्यर्थ अधिकरणतायामन्वयः । अधिकरणतायाः निरूपितत्वसंबंधेन अस् धात्वर्थ आधेयत्वेऽन्वयः । आधेयत्वस्य ति प्रत्ययार्थ आश्रयतासंबंधेन तद्धर्मेऽन्वयः । तथा च यत्किञ्चिद्वस्तुनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयः तद्धर्मः । इति विग्रहवाक्यात् शाब्दबोधः । समासवाक्यात् तद्धर्मनिष्ठ आधेयतानिरूपित अधिकरणतावान् । तस्य आधेयतासंबंधेन सप्तम्यर्थ विशेष्यतायामन्वयः । विशेष्यतायाः निरूपकत्वसंबंधेन अनुभवेऽन्वयः । यथार्थस्य अभेसंबंधेन अनुभवेऽन्वयः । तथा च तद्धर्मनिष्ठ आधेयतानिरूपित अधिकरणताव न्निष्ठ विशेष्यतानिरूपकः अनुभवः यथार्थाभिन्नः ।

सः प्रकारः यस्य सः तत्प्रकारकः इति विग्रहः । यस्य इत्यत्र यच्छब्दस्य अनुभवोऽर्थः षष्ठ्याः प्रकारित्वमर्थः । अनुभवस्य आधेयता संबंधेन प्रकारितायामन्वयः । प्रकार शब्दस्य प्रकारतावान् इत्यर्थः । प्रकारितायाः निरूपितत्वसंबंधेन प्रकारतावानित्येकदेश प्रकारतायामन्वयः। प्रकारतावतः अभेदसंबंधेन तद्धर्मेऽन्वयः । तथा च अनुभवनिष्ठ प्रकारितानिरूपित प्रकारतावदभिन्नः तद्धर्मः । इति विग्रहवाक्यात् शाब्दबोधः । समासवाक्यात् तद्धर्मनिष्ठ प्रकारतानिरूपित प्रकारितावान् । तस्य अभेदसंबंधेन अनुभवेऽन्वयः । तथा च तद्धर्मनिष्ठ प्रकारता निरूपित प्रकारितावदभिन्नः अनुभवः ।

तथा च तद्धर्मनिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ विशेष्यतानिरूपक तद्धर्मनिष्ठ प्रकारतानिरूपित प्रकारितावदभिन्नः अनुभवः यथार्थानुभवः इति शाब्दबोधः फलितः ।

इदं खलु लक्षणवाक्यम् । अनेन वाक्येन यथार्थानुभवस्य लक्षणमुच्यते । तद्धर्मनिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ विशेष्यतानिरूपकत्वे सति तद्धर्मनिष्ठ प्रकारतानिरूपकत्वे सति अनुभवत्वं यथार्थानुभवस्य लक्षणम् । अत्र लक्षणसमन्वयः । यत्र पुरोवर्तिनि घटे अयं घटः इत्याकारकं यत् ज्ञानं जायते सः यथार्थानुभवः । स एव लक्ष्यः । वर्तते तत्रेदं लक्षणं तथा हि तादृशज्ञाने त्रयो विषयाः । विशेष्यः प्रकारः संसर्गश्चेति । अत्र पुरोवर्ती घटः विशेष्यः घटत्वं प्रकारः । समवायः संसर्गः । तथा च तज्ज्ञानं घटविशेष्यकं घटत्वप्रकारकं समवायसंसर्गकं च भवति । एवं च अत्र तच्छब्देन प्रकारत्वोपलक्षितं घटत्वं ग्राह्यत्वम् । तद्धर्मः घटत्वम् । तन्निष्ठ आधेयतानिरूपित अधिकरणतावान् घटः । तन्निष्ठ विशेष्यतानिरूपकत्वं अनुभवे वर्तते । किंच तद्धर्मः घटत्वम् । तन्निष्ठ प्रकारतानिरूपकत्वं घटत्वनिष्ठप्रकारतानिरूपकत्वं अनुभवे वर्तते इति लक्षणसमन्वयः ।

**दलकृत्यम्**—१) तद्धर्मनिष्ठ आधेयतानिरूपक अधिकरणतावन्निष्ठ विशेष्यतानिरूपकत्वे सति अनुभवत्वं यथाथानुभवस्य लक्षणमित्येवोक्तौ शुक्तिं दृष्ट्वा इदं रजतमिति भ्रमे अतिव्याप्तिः । तत्कथमिति चेत् तद्धर्मपदेन शुक्तित्वस्योपादाने, तद्धर्मनिष्ठ आधेयतानिरूपित अधिकरणतावती शुक्तिः । तन्निष्ठ विशेष्यतानिरूपकत्वं शुक्तिनिष्ठ विशेष्यतानिरूपकत्वं तादृश भ्रमे वर्तते इति अतिव्याप्तिः । अतः तद्धर्मनिष्ठ प्रकारतानिरूपकत्वं निवेशनीयम् । अत्र तद्धर्मपदेन शुक्तित्वस्योपादाने शुक्तित्वनिष्ठ प्रकारतानिरूपकत्वं भ्रमे नास्ति किंतु रजतत्वनिष्ठ प्रकारतानिरूपकत्वं वर्तते । अतः नातिव्याप्तिः ।

२) तावन्मात्रोक्तौ तद्धर्मनिष्ठ प्रकारतानिरूपकत्वे सति अनुभवत्वं यथार्थानुभवस्य लक्षणमित्येवोक्तौ पुनः शुक्तिं दृष्ट्वा इद

रजतमिति भ्रमेऽतिव्याप्तिः। तत्कथमिति चेत्, तद्धर्मपदेन रजतत्व स्योपादाने रजतत्वनिष्ठ प्रकारतानिरूपकत्वं भ्रमे वर्तते। अतः अति व्याप्तिः इति चेत् तद्धर्मवन्निष्ठ विशेष्यतानिरूपकत्वं विशेषणं देयम्। तद्धर्मः रजतत्वं तन्निष्ठ आधेयतानिरूपित अधिकरणतावत् रजतत्वनिष्ठ आधेयतानिरूपित अधिकरणतावत् रजतम्। तन्निष्ठ विशेष्यतानिरूप कत्वं रजतनिष्ठ विशेष्यतानिरूपकत्वं शुक्ति दृष्ट्वा जाते इदं रजतमिति भ्रमे नास्ति। किंतु शुक्तिनिष्ठ विशेष्यतानिरूपकत्वं वर्तते। अतः नातिव्याप्तिः।

३) एवमपि पुनः शुक्ति दृष्ट्वा इदं रजतमिति भ्रमे अति व्याप्तिः। तत्कथमिति चेत् तद्धर्मः रजतत्वम्। कालिकसंबंधाव च्छिन्न तद्धर्मनिष्ठ आधेयतानिरूपित अधिकरणतावत् शुक्तिः। (कालिकसंबंधेन रजतत्वं शुक्तौ भासते) तन्निष्ठ विशेष्यतानिरूपकत्वं भ्रमे वर्तते इति अतिव्याप्तिः। अतः तद्धर्मनिष्ठ आधेयतायां प्रकार तावच्छेदक संबंधावच्छिन्नत्वं निवेशनीयम्। अत्र इदं रजतमिति भ्रमे शुक्तौ रजतत्वं समवायसंबंधेन भासते। अतः प्रकारतावच्छेदकसंबंधः समवायसंबंधः। कुतः इति चेत् विशेष्ये तद्धर्मः येन संबंधेन भासते सः संबंधः प्रकारतावच्छेदकसंबंधः इति नियमात् प्रकारतावच्छेदक संबंधावच्छिन्न (समवायसंबंधावच्छिन्न) तद्धर्मनिष्ठ आधेयतानिरूपित अधिकरणतावत् रजतं न तु शुक्तिः। अतः तन्निष्ठ विशेष्यतानिरूप कत्वं रजतनिष्ठ विशेष्यतानिरूपकत्वं भ्रमे नास्तीति नातिव्याप्तिः।

४) अत्र अनुभवत्वानुपादाने रजतं मे भूयादिति। इच्छाया मतिव्याप्तिः। तत्कथमिति तादृश इच्छायां रजते रजतत्वं भासते। अतः रजतत्ववद्रजतनिष्ठ विशेष्यतानिरूपकत्वम्। रजतत्वप्रकारत्वमपि वर्तते इति अतिव्याप्तिः। इच्छायामनुभवत्वाभावात् नातिव्याप्तिः।

५) एवमपि रंगरजतयो इमे रजतरंगे इति रंगं दृष्ट्वा इदं रजतं इति, रजतं दृष्ट्वा इदं रंगमिति समूहालम्बनात्मक भ्रमेऽतिव्य ाप्तिः। कथमिति चेत् तद्धर्म पदेन रजतत्वस्योपादाने तद्धर्मनिष्ठ

आधेयता निरूपित अधिकरण तावत् रजतम्। तन्निष्ठ विशेष्यकत्वं भ्रमे वर्तते। तद्धर्मः रजतत्वम् तत्प्रकारकत्वं वर्तते। अनुभवत्वमपि वर्तते इति अतिव्याप्तिः। अतः प्रकारताविशेष्यतयोः निरूप्य निरूपकभावसंबंधः निवेशनीयः। तथा च तद्धर्मनिष्ठ प्रकारता निरूपिता या तद्धर्मवन्निष्ठा विशेष्यता तन्निरूपकत्वे सति अनुभवत्वं यथार्थानुभवस्य लक्षणम्।

तादृशभ्रमे रंगांशे रजतत्वस्य भानात् रजतत्वनिष्ठ प्रकारतायाः रजतनिष्ठ विशेष्यताया निरूप्य निरूपक भावसंबंधो नास्तीति नातिध्याप्तिः। तथाच तद्धर्मनिष्ठ आधेयता निरूपित अधिकरणतावन्निष्ठ विशेष्यता निरूपिता या तद्धर्मनिष्ठ प्रकारता तन्निरूपकत्वे सति अनुभवत्वं यथार्थानुभवस्य लक्षणम्।

# अयथार्थानुभवनिरूपणम्

## तदभाववति तत्प्रकारकानुभवोऽयथार्थः।

तस्याभावः तदभावः। तदभावः अस्मिन्नस्तीति तदभाववान्। तस्मिन् तदभाववति।

तस्य अभावः। तच्छब्दस्य तद्धर्मः इत्यर्थः। षष्ठ्याः प्रतियोगित्वमर्थः। तद्धर्मस्य आधेयता संबंधेन षष्ठ्यर्थ प्रतियोगितायामन्वयः तथाच तद्धर्मनिष्ठ प्रतियोगिता। प्रतियोगितायाः निरूपकत्वसंबंधेन अभाव शब्दार्थ अभावेऽन्वयः। तथाच तद्धर्मनिष्ठ प्रतियोगिता निरूपक अभावः।

अस्मिन्नित्यत्र इदंपदस्य यत्किञ्चिद्वस्तु इत्यर्थः सप्तम्याः अधिकरणत्वमर्थः। यत्किञ्चिद्वस्तुनः आधेयता संबंधेन अधिकरणतायामन्वयः। अस् धातोराधेयत्वम्। अधिकरणतायाः निरूपकत्वसंबंधेन आधेयत्वेऽन्वयः। आधेयत्वस्य 'ति' प्रत्ययार्थ आश्रयता संबंधेन तद्धर्मनिष्ठ प्रतियोगिता निरूपक अभावेऽन्वयः। तथाच यत्किञ्चिद्वस्तुनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयः तद्धर्मनिष्ठ प्रतियोगिता

निरूपक अभावः इति विग्रहवाक्यजन्यबोधः। समासवाक्यात्तु तद्धर्म निष्ठ प्रतियोगिता निरूपक अभाव निष्ठ आधेयता निरूपित अधिक रणतावान्।

सप्तम्याः विशेष्यत्वमर्थः। अधिकरणतावतः आधेयता संबंधेन विशेष्यतायामन्वयः। विशेष्यतायाः निरूपितत्वसंबंधेन अयथार्थानुभवेऽन्वयः।

तत्प्रकारकः इत्यत्र सः प्रकारः यस्य सः। अस्य इत्यत्र तच्छब्दस्य अयथार्थानुभवः इत्यर्थः षष्ठ्याः प्रकारित्वमर्थः। अयथार्थानुभवस्य आधेयता संबंधेन प्रकारित्वेऽन्वयः। तथाच अयथार्थानुभव निष्ठ प्रकारिता। प्रकारशब्दस्य प्रकारतावदित्येकदेश प्रकारताया मन्वयः। प्रकारतावतः अभेदसंबंधेनतच्छब्दार्थ तद्धर्मेऽन्वयः। तथाच अयथार्थानुभव निष्ठ प्रकारिता निरूपित प्रकारतावदभिन्नः तद्धर्मः। इति विग्रहवाक्यजन्य शाब्दबोधः। समासवाक्यात्तु तद्धर्मनिष्ठ प्रकारता निरूपित प्रकारितावदभिन्न अयथार्थानुभवः।

तद्धर्मनिष्ठ प्रतियोगिता निरूपक अभावनिष्ठ आधेयता निरूपित अधिकरणतावन्निष्ठ विशेष्यता निरूपक तद्धर्मनिष्ठ प्रकारता निरूपक प्रकारितावदभिन्नः अयथार्थानुभवः। इति शाब्दबोधः फलितः।

इदं खलु लक्षणवाक्यम्। अनेन वाक्येन अयथार्थानुभवस्य लक्षणमुच्यते। तत्किमिति चेत् तत्र प्रकारीभूत धर्मः (तद्धर्मः) रजतत्वम्। तन्निष्ठप्रतियोगिता निरूपक अभावः रजत्वाभावः। रजतत्वाभाववती शुक्तिः। तन्निष्ठ विशेष्यता निरूपकत्वं अयथार्थानुभवे वर्तते। किञ्च प्रकारी भूत धर्मः रजतत्वं। रजतत्व प्रकारत्वमपि वर्तते। अनुभवत्वमपि वर्तते इति लक्षणसमन्वयः।

दलकृत्यं–तद्धर्मनिष्ठ प्रकारता निरूपकत्वे सति अनुभवत्वं अयथार्थानुभवस्य लक्षणमित्येवोक्तौ रजतं दृष्ट्वा इदं रजतमिति यथार्थानुभवेऽतिव्याप्तिः। कथमिति चेत् तद्धर्मः रजतत्वं। तत्प्रकारकत्वं यथार्थानुभवे वर्तते। अनुभवत्वमपि वर्तते इति अतिव्याप्तिः।

अतः तद्धर्मनिष्ठ प्रतियोगिता निरूपक अभावनिष्ठ आधेयता निरूपित अधिकरणतावन्निष्ठ विशेष्यता निरूपकत्वं निवेशनीयम्। इदानीं नातिव्याप्तिः। तद्धर्म पदेन रजतत्वस्य उपादानात् तद्धर्मनिष्ठ प्रतियागिता निरूपक अभाववत् रजतत्वाभाववत् शुक्तिः। न तु रजतम्। अतः शुक्तिनिष्ठ विशेष्यता निरूपकत्वं यथार्थानुभवे नास्तीति नातिव्याप्तिः।

२) (तावन्मात्रोक्तौ) तद्धर्मनिष्ठ प्रतियोगिता निरूपक अभावनिष्ठ आधेयता निरूपित अधिकरणतावन्निष्ठ विशेष्यता निरूपकत्वे सति अनुभवत्वं अयथार्थानुभवस्य लक्षणमित्येवोक्तौ, रजतं दृष्ट्वा इदं रजतमिति यथार्थानुभवेऽतिव्याप्तिः। तत्कथमिति चेत् तद्धर्म पदेन शुक्तित्वस्योपादाने तद्धर्मनिष्ठ प्रतियोगिता निरूपक अभाववत् रजतम्। तन्निष्ठ विशेष्यता निरूपकत्वं अनुभवत्वं च यथार्थानुभवे वर्तते इति अतिव्याप्तिः अतः तद्धर्मनिष्ठ प्रकारता निरूपकत्वं निवेशनीयम् इदानीं नातिव्याप्तिः।

तद्धर्मपदेन शुक्तित्वस्योपादानात् तद्धर्मनिष्ठ प्रकारता निरूपकत्वं शुक्तित्वनिष्ठ प्रकारता निरूपकत्वं इदं रजतं इति यथार्थानुभवे नास्तीति नाविव्याप्तिः।

३) अनुभवत्वानुपादाने अयथार्थ इच्छायामतिव्याप्तिः। तत्र शुक्तिविशेष्यकत्वं रजतत्वप्रकारकत्वं च वर्तते इति अतिव्याप्तिः। अतः अनुभवत्वं निवेशनीयम्।

लक्षणे तु अनूभवत्वनिवेशे इच्छायां नातिव्याप्तिः। इच्छायां अनुभवत्वाभवात् नातिव्याप्तिः।

४) एवं समुदायात्मक यथार्थानुभवेऽतिव्याप्तिः। तत्कथमिति चेत् समूहालंबनात्मक यथार्थानुभवेऽतिव्याप्तिः। कथमिति चेत् उक्त समूहालंबनात्मक यथार्थानुभवे रंगांशे रंगत्वं भासते। रजतांशे रजतत्वं भासते। तादृश यथार्थानुभवे रंगविशेष्यकत्वं रजत विशेष्यकत्वं च वर्तते। एवं रंगत्वप्रकारकत्वं रजतत्व प्रकारकत्वं च वर्तते

इति अतिव्याप्तिः। तादृश ज्ञानस्य रजतत्वाभाववद्रंगविशेष्यक त्वात् रजतत्वप्रकारकत्वात्। अतः प्रकारता विशेष्यतायाश्च निरूप्य निरूपकभाव संबंधः निवेशनीयः।

तद्धर्मनिष्ठ प्रकारता निरूपिता या तद्धर्माभाववन्निष्ठ विशेष्यता तन्निरूपकत्वे सति अनुभवत्वम् अयथार्थानुभवस्य लक्षणमिति फलितं। इदानीं उक्त यथार्थानुभवे नातिव्याप्तिः। कथमिति चेत् रंगांशे रंगत्वस्य भानात् रंगत्वनिष्ठ प्रकारितायाः रंगनिष्ठ विशेष्यतायाश्च निरूप्यनिरूपकभाव संबंधः वर्तते। न तु रंगत्वाभाववद्रजतविशे ष्यकत्वं वर्तते इति नातिव्याप्तिः।

एवमपि रजतं दृष्ट्वा इदं रजतमिति यथार्थानुभवे पुनरति व्याप्तिः। तत्कथमिति चेत् रजते रजतत्वं समवायसंबंधेन वर्तते। न तु संयोगसंबंधेन। अतः संयोगसंबंधावच्छिन्न रजतत्वनिष्ठ प्रति योगिता निरूपक अभाववत् रजतम्। तद्विशेष्यकत्वं यथार्थानुभवे वर्तते किं च प्रकारकत्वमपि वर्तते इति अतिव्याप्तिः। तद्धर्मनिष्ठ प्रतियोगितायाम् प्रकारतावच्छेदक संबंधावच्छिन्नत्वं निवेशनीयम्।

तद्धर्मनिष्ठ प्रकारिता निरूपिता या तद्धर्मनिष्ठ प्रकारतावच्छे दक संबंधावाच्छिन्न प्रतियोगिता निरूपक अभाववन्निष्ठ विशेष्यता तन्निरूपकत्वे सति अनुभवत्वम् अयथार्थानुभवस्य लक्षणमिति फलितं। इदानीं यथार्थानुभवे नातिव्याप्तिः। तत्कथमिति चेत् उक्त यथार्था नुभवे रजते रजतत्वं प्रकारतावच्छेदक समवाय संबंधेन वर्तते। अतः तद्धर्मनिष्ठप्रकारतावच्छेदक समवाय संबंधावच्छिन्न प्रतियोगिता निरूपक अभावो रजते नास्ति। अभाववती शुक्तिरेव। तद्विशे ष्यकत्वं यथार्थानुभवे नास्तीति नातिव्याप्तिः।

## सैवाप्रमेत्युच्यते (स एव भ्रम इत्युच्यते)

# यथार्थानुभविभागनिरूपणम्

**यथार्थानुभवश्चतुर्विधः । प्रत्यक्षानुमितिशाब्दभेदात् ।**

शाब्दबोधप्रकारस्तु इत्थम् । चतस्त्रः विधाः यस्य सः इति विग्रहः । चतस्र पदस्य चतुष्ट्त्वसंख्या पर्याप्त्यधिकरणमर्थः । विधा शब्दस्य विभाजक धर्मान्यितमवंत अर्थः चतुष्ट्त्वसंख्या पर्याप्त्यधिकरणस्य अभेदसंबंधेन विभाजक धर्मेष्वन्वयः । चतुष्ट्त्वसंख्या पर्याप्त्यधिकरणाभिन्न विभाजकधर्मान्यितमवन्तः ।

यस्य इत्यत्र यच्छब्दस्य यत् अर्थः । यस्य स्वनिष्ठ अधिकरणता निरूपितत्व संबंधेन षष्ठयर्थ आधेयत्वे अन्वयः । तथा च यन्निरूपित आधेयत्वं । आधेयत्वस्य आश्रयता संबंधेन विभाजक धर्मान्यतमेष्वन्वयः । तथा च चतुष्ट्त्वसंख्यापर्याप्त्यधिकरणाभिन्न विभाजक धर्मान्यितमवन्तः यन्निरूपित आधेयत्वाश्रयाः इति विग्रहवाक्यात् शाब्दबोधः । समासवाक्यात्तु चतुष्ट्त्वसंख्या पर्याप्त्याधिकरण विभाजक धर्मान्यतमनिष्ठ आधेयतानिरूपित अधिकरणतावान् । तस्य अभेद संबंधेन यथार्थानुभवेऽन्वयः ।

प्रत्यक्षानुमित्युपमिति शाब्दभेदात् इत्यत्र प्रत्यक्षं च अनुमितिश्च उपमितिश्च शाब्दं च प्रत्यक्षानुमित्युपमिति शाब्दानि । तेषां भेदः शाब्द भेदः । तस्मात् शाब्दभेदात् प्रत्यक्षानुमित्युपमितिशाब्दानामि षष्ठयाः आधेयत्वमर्थः । प्रत्यक्षानुमियुपमितिशाब्दनां निरूपितत्व संबंधेन आधेयत्वेऽन्वयः । आधेयत्वस्याश्रयता संबंधेने भेदशब्दार्थ असाधारण धर्मेष्वन्वयः । तथाच प्रत्यक्षानुमित्युपमितिशाब्दनिरूपित आधेयत्वाश्रय असाधारणधर्माः । असाधार्माणां पञ्चम्यर्थ अभेदसंबंधेन विभाजक धर्मेष्वन्वयः ।

तथा च प्रत्यक्षानुमित्युपमितिशाब्दनिरूपित आधेयत्वाश्रय असाधारण धर्माभिन्न चतुष्ट्त्व संख्या पर्याप्त्यधिकरण विभजक धर्म निष्ठ आधेयता निरूपित अधिकरणतावदभिन्नः यथार्थानुभवः ।

# तत्करणविभागनिरूपणम्

**तत्करणमपि चतुर्विधम् । प्रत्यक्षानुमानोपमानशब्दभेदात्**

शाव्दबोधस्तु पूर्ववत् । प्रत्यक्षानुमानोपमानशब्दनिष्ठ कार्यता निरूपित कारणतावान् चतुष्ट्वसंख्या पर्याप्त्यधिकरण विभाजक धर्मान्यतमनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्नः ।

# करणत्वनिरूपणम्

**असाधारण कारणं करणं (व्यापारवत्)**

इदं खलु लक्षणवाक्यम् अनेन वाक्येन करणस्य लक्षणमाह । व्यापारवत्वे सति असाधारणकारणत्वं करणस्य लक्षणम् ।

घटं प्रति दण्डः असाधारण कारणम् । तत्रच दण्डे इदं लक्षणं वर्तते । तत्कथमिति चेत् घटं प्रति दण्डः भ्रमणरूप व्यापा रवत्तासंबंधेन असाधारण कारणम् । अतः उक्तलक्षणस्य दण्डे विद्य मानत्वाल्लक्षण समन्वयः ।

व्यापारवत्वं नाम ताज्जन्यत्वे सति तज्जन्यजनकत्वम् चक्रभ्रमणं च दण्डजन्यम् । एवं दण्डजन्यघटजनकं एवं रूपज्ञानं प्रति चक्षुरिंद्रियं करणम् । व्यापारः संयोगः । स च संयोगः चक्षुरिंद्रिजन्यः एवः चक्षुरिंद्रियजन्यरुपज्ञानजनकः ।

# कारणत्वनिरूपणम्

उक्तलक्षणस्य कारणशब्दघटितवात् तद्धटक कारणशब्दार्थं विना करणशब्दार्थो न भवति । अतः कारणलक्षणमाह ।

**कार्यनियतपूर्ववृत्ति कारणम् ।**

अनन्यथासिद्धत्वे सति कार्यनियत पूर्ववृत्तित्वं कारणस्य लक्ष णम् । वर्तते च इदं लक्षणम् घटं प्रतिकारणीभूत दण्डे । कथ मिति चेत् तत्र कार्यं घटः । कारणं दण्डः । कार्यव्यापकत्वं नाम

कार्याधिकरण वृत्ति अत्यंताभावाप्रतियोगित्वम्। कार्यं घटः तद धिकरणं कपाले। कार्याधिकरणवृत्तिः यो अत्यंताभावः पटाभावः न तु दण्डाभावः। अभावप्रतियोगी पटः न तु दण्डः। अप्रति योगित्वं दण्डे। एवं दण्डश्च न अन्यथासिद्धः। अपि तु अनन्यथा सिद्धत्वम् दण्डे वर्तते इति लक्षणसमन्वयः।

उक्तलक्षणस्य कार्यशब्दघटितत्वात् तज्ज्ञानं विना कारण शब्दस्यार्थज्ञानं न भवति। कुतः इति चेत् घटितज्ञानं प्रति घटकज्ञानस्य अवश्यकत्वात्। अतः कार्यशब्दार्थमाह।

**कार्यं प्रागभावप्रतियोगि ।**

उत्पत्तेः पूर्वं विद्यमानः अभावः प्रागभांवः तत्प्रतियोगि कार्यं। तथाच प्रागभावप्रतिरोगित्वं कार्यस्य लक्षणम्। वर्तते च इदं लक्षणं कार्यभूतघटे। कथमिति चेत् घटोत्पत्तेः पूर्वं घटप्रागभावः वर्तते। तादृश अभावप्रतियोगी घटः। अभावप्रतियोगित्वं घटे वर्तते इति लक्षणसमन्वयः।

# समवायिकारणनिरूपणम्

## कारणं त्रिविधम्। समवाय्यसमवायिनिमित्तभेदात्

शाब्दबोधस्तु इत्थम्। समवाय्यसमवायिनिमित्त निरूपित आधेयत्वाश्रय असाधारण धर्माभिन्न चतुष्ट्व संख्या पर्याप्त्यधिकरण विभाजकधर्मनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्नं कारणम्।

**यत्समवेतं कार्यमुत्पद्यते तत्समवायि कारणम् ।**
**यथा तन्तवः परस्य पटश्च स्वगतरूपादेः ।**

यस्मिन्समवेतं यत्समवेतं। यत् शब्पस्य यत् इत्यर्थः। सप्तम्याः अधिकरणत्वमर्थः। यच्छब्दार्थस्य आधेयतासंबंधेन सप्तम्यर्थ अधिकरण तायामन्वयः। अधिकरणतायाः निरूपितत्वसंबंधेन समवायसंबंधाव च्छिन्न आधेयत्वेऽन्वयः। आधेयत्वस्य अभेदसंबंधेन कार्ये अन्वयः।

तथा च यन्निष्ठ अधिकरणतानिरूपित समवायसंबंधावच्छिन्न आधेयता वदभिन्नं कार्यम् ।

उत्पद्यते इत्यत्र उत्पद् शब्दस्य उत्पत्तिरित्यर्थः । उत्पत्तेः त्य प्रत्ययार्थ आश्रयतासंबंधेन कार्येऽन्वयः ।

तया च यन्निष्ठ अधिकरणतानिरूपित समवायसंबंधावच्छिन्न आधेयतावदभिन्नं कार्यं उत्पत्त्याश्रयः ।

उत्पन्नं सत् कार्यं यस्मिन् समवेतं भवति तत् सववायिकारणम् । पटं प्रति तंतवः समवायिकारणम् । तत्कथमिति चेत् पटः उत्पन्नं सन् तंतुषु समवायसंबंधेन वर्तते । तत्र तंतवः तादात्म्यसंबंधेन वर्तते । तथा च समवायसंबंधावच्छिन्न कार्यनिष्ठ कार्यतानिरूपित तादात्म्य संबंधावच्छिन्न कारणत्वं समवायिकारणस्य लक्षणम्

पटं प्रति तंतवः समवायिकारणम् । पटः समवायसंबंधेन तंतुषु वर्तते । अवयवावयविनोः समवायः तत्र तंतुषु तंतवः तादात्म्यसंबंधेन वर्तते । अतः पटनिष्ठ समवायसंबंधावच्छिन्न कार्यतानिरूपित तादात्म्यसंबंधावच्छिन्न कारणत्वं तंतुषु वर्तते इति लक्षणसमन्वयः ।

एवं पटरूपं प्रति पटः समवायिकारणम् । पटरूपं पटे समवाय संबंधेन विद्यमानं सत् उत्पद्यते । तत्र पटे पटः तादात्म्यसंबंधेन वर्तते । समवायसंबंधावच्छिन्न पटरूपनिष्ठ कार्यतानिरूपित तादात्म्य संबंधावच्छिन्न कारणत्वं पटे वर्तते इति लक्षणसमन्वयः ।

अत्र कारणतायां तादात्म्य संबंधावाच्छिन्नत्वानुपादाने असम वायिकारणेऽतिव्याप्तिः । कथमिति चेत् समवायसंबंधेन पटं प्रति (पटरूपं) तंतुद्वयसंयोगः असमवायिकारणम् । अतः समवायसंबंधाव च्छिन्न पटनिष्ठ कार्यतानिरूपित समवायसंबंधावाच्छिन्न कारणत्वं तंतुद्वयसंयोगे वर्तते इति अतिव्याप्तिः ।

अतः कारणतायां तादात्म्यसंबंधावच्छिन्नत्वं निवेने तु नातिव्याप्तिः । पटं प्रति तंतुद्वयसंयोगः समवासंबंधेन कारणम् । न तु तादात्म्यसंबंधेन कारणम् । अतः तादात्म्यसंबंधावच्छिन्न कारणतायाः तंतुद्वयसंयोगे अभावात् नातिव्याप्तिः ।

**कार्येण कारणेन सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायि कारणम्। यथा तंतुसंयोगः पटस्य तंतुरूपं पटगतरूपस्य च।**

समवायसंबंधेन पटं प्रति तंतुद्वयसंयोगः असमवायि कारणम् कथमिति चेत् कार्येण पटेन सह एकस्मिन्नर्थे तंतु रूपार्थे तंतुद्वय संयोगः समवायेन विद्यमानं सत् कारणं भवति। समवायसंबंधा– वच्छिन्न पटनिष्ठ कार्यता निरूपित समवायसंबंधावच्छिन्न कारणत्वं तंतुद्वय संयोगे वर्तते इति लक्षणसमन्वयः।

एवं पटरूपं प्रति तंतुरूपमपि असमवायिकारणम्। कथमिति चेत् स्वं तंतुरूपम् स्वकार्यं पटरूपम्। स्वकार्यसमवायिकरणं पटः। स च समवायसंबंधेन तंतुषु वर्तते। तत्र तंतुषु तंतुरूपं समवाय संबंधेन वर्तते इति लक्षणसमन्वयः। तथाच समवाय, स्वसमवायि कारण समवेतत्वान्यतर संबंधावच्छिन्न कार्यता निरूपित समवाय संबंधावच्छिन्न कारणत्वं असमवायिकारणस्य लक्षणम्।

# अथ निमित्तकारणनिरूपणम्

**तदुभयभिन्नं कारणं निमित्तकारणम्।**

तच्च तत् उभयं च तदुभयम्। उभयस्माद्भिन्नम् तदुभयभिन्नम्। इति विग्रहः।

तथाच समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणस्य लक्षणम्।

**यथा तुरीवेमादिकं पटस्य**

पटं प्रति तुरीवेमादिकं निमित्तकारणं भवति। पटं प्रति तुरीवेमादिकं न समवायिकारणं नाप्यसमवायिकारणं अतः समवायिकारणभिन्नत्वात् असमवायिकारणभिन्नत्वात् कारणत्वाल्लक्षणसमन्वयः।

अत्र कारणत्वं निमित्तकरणस्य लक्षणमित्येवोक्तौ समवायिकारणादावतिव्याप्तिः। तस्यापि कारणत्वात्। अतः दलद्वयं निवेशनीयम्।

अत्र कारणत्वानुपादाने पाषाणादौ अतिव्याप्तिः। तस्य पटं प्रति समवायिकारणभिन्नत्वात् असमवायिकारणभिन्नत्वाच्च। अतः कारणत्वोपादाने नातिव्याप्तिः।

**तदेतत् त्रिविधकारणमध्ये यदसाधारणकारणं तदेव करणम्।**

समवाय्यसमवायिनिमित्तकारणमध्ये यत् व्यापारवत् असाधारण कारणं तदेव करणम्।

व्यापारवत्वे सति असाधारण कारणत्वं करणस्य लक्षणम्। असाधारणत्वानुपादाने ईश्वरादृष्टादेरपि व्यापारवत्वात् अतिव्याप्तिः। अतः असाधारणत्वम् निवेशनीयम्।

# प्रत्यक्षनिरूपणम्

**तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम्।**

प्रत्यक्षानुमानादि निरूपित घटकत्वाश्रय प्रत्यक्षनिष्ठ विषयता निरूपक ज्ञाननिष्ठ कार्यता निरूपित कारणत्वं प्रत्यक्षस्य लक्षणम्। प्रत्यक्षानुमानादिमध्ये प्रत्यक्षज्ञानं प्रति यत्करणं तदेव प्रत्यक्षप्रमाणम्।

**इंद्रियार्थसनिकर्षजन्यं ज्ञानं प्रत्यक्षम्।**

शाब्दबोधस्तु पूर्ववत्। इंद्रियार्थसन्निकर्षनिष्ठ जनकता निरूपित जन्यतावदभिन्नम् ज्ञानाभिन्नं प्रत्यक्षम्।

लक्षणं तु इंद्रियार्थसन्निकर्षनिष्ठ जनकतानिरूपित जन्यत्वे सति ज्ञानत्वं प्रत्यक्षस्य लक्षणम्।

प्रत्यक्षं प्रति इंद्रियार्थसन्निकर्षः जनकं। प्रत्यक्षं जन्यं। जनकता इंद्रियार्थसन्निकर्षनिष्ठा। जन्यता प्रत्यक्षनिष्ठा तयोर्निरूपितत्वं संबंधः। तथाच इंद्रियार्थसन्निकर्षनिष्ठ जनकतानिरूपित जन्यत्वं प्रत्यक्षे वर्तते ज्ञानत्वमपि वर्तते इति लक्षणसमन्वयः।

इंद्रियं चक्षुरादिः। अर्थोघटादिः अनयोः सन्निकर्षः संयोगादिः। तज्जन्यं यदयं घटः इति ज्ञानं तदेव प्रत्यक्षमित्युच्यते।

**तद्द्विविधम् निर्विकल्पकं सविकल्पकं चेति ।**

शाब्दबोधप्रकारस्तु पूर्ववद्बोध्यम् । निर्विकल्पकत्वाभिन्न सविकल्पकत्वाभिन्न द्वित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतरनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्नं प्रत्यक्षम् ।

**निष्प्रकारकज्ञानं निर्विकल्पकम् ।**

प्रकारताख्य विषयता शून्यमित्यर्थः ।

**सप्रकारकज्ञानं सविकल्पकम्**

प्रकारताख्य विषयता विशिष्ठमित्यर्थः ।

**यथा डित्थोऽयं ब्राह्मणोऽयं श्यामोऽयं पाचकोऽयमिति**

इदं ज्ञानं डित्थत्वप्रकारक डित्थविशेष्यकं, ब्राह्मणत्व प्रकारक ब्राह्मण विशेष्यकं श्यामत्वप्रकारक श्यामविशेष्यकं भवतीति प्रकारताख्य विषयताविशिष्ठत्वाच्च लक्षणसमन्वयः ।

**प्रत्यक्षज्ञानहेतुरिंद्रियार्थसन्निकर्षः षड्विधः । संयोगः सयुक्तसमवायः सयुक्तसमवेतसमवायः, समवायः समवेत समवायः विशेष्यविशेषणभावश्चेति ।**

शाब्जबोधप्रकारस्तु पूर्ववद्ग्राह्यम् ।

**चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः ।**

घटविषयक प्रत्यक्षं यदा चक्षुरिंद्रियेण जन्यते तदा संयोगः इंद्रियार्थसन्निकर्षः अत्र इंद्रियं चक्षुरर्थो घटः तयोः संबंधः संयोगः ।

२) संयुक्तसमवायमुदाहरति ।

**घटरूपप्रत्यक्षे संयुक्त समवायः ।**

चक्षुःसंयुक्ते घटे रूपस्य समवायात् । रूपत्व सामान्य प्रत्यक्षे संयुक्त समवेत समवायः । चक्षुःसंयुक्ते घटे रूपं समवेतम् । तत्र रूपत्वस्य समवायात् । श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात् । शब्दस्य आकाश गुणत्वात् । गुण गुणिनोः समवायात् । शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः ।

श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् । अभाव प्रत्यक्षे विशेषण विशेष्यभावः सन्निकर्षः । भुतलं घटाभाववत् इत्यत्र चक्षुसंयुक्त भूतले घटाभावस्य विशेषणत्वात् । एवं सन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् । तत्करणमिंद्रियम् । तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ।

इति प्रत्यक्ष परिच्छेदः ।

# अथ अनुमानपरिच्छेदः

## अनुमितिकरणमनुमानम् ।

अनुमितेः करणं अनुमितिकरणम् । षष्ठ्याः कार्यत्वमर्थः अनुमितेराधेयता संबंधेन षष्ठ्यर्थ कार्यतायामन्वयः । अनुमितिनिष्ठ कार्यता । करणशब्दस्य व्यापारसंबंधावच्छिन्नकारणत्वमर्थः । अनुमिति निष्ठकार्यतायाः निरूपितत्वसंबंधेन व्यापारसंबंधावच्छिन्न कारणतायां अन्वयः । कारणतावतः अभेद संबंधेन अनुमानेऽन्वयः ।

तथाच अनुमितिनिष्ठ कार्यतानिरूपित व्यापारसंबंधावच्छिन्न कारणतावदभिन्नं अनुमानम् ।

इदं खलु लक्षणवाक्यम् । अनेन वाक्येन अनुमानस्य लक्षण मुच्यते । अनुमितिनिष्ठ कार्यता निरूपित व्यापार संबंधावाच्छिन्न कारणत्वं अनुमानस्य लक्षणम् । अनुमाने लक्षण समन्वयः । पर्वतो वन्हिमानित्याकारक अनुमिति प्रति वन्हिव्याप्यो धूमः इत्याकारक परामर्शरूपव्यापारवत्तासंबंधेन कारणम् ।

अत्र अनुमितिः कार्यं कार्यता अनुमिनितिष्ठिा कारणं वन्हिव्याप्यो धूमः इति व्याप्तिज्ञानम् । कारणता व्याप्तिज्ञाननिष्ठा । व्यापारः परामर्शः । अनुमिति प्रति व्याप्तिज्ञानस्य व्यापारसंबंधेन कारणत्वात् ।

अनुमितिनिष्ठ कार्यतायाः व्यापारसंबंधावच्छिन्न अनुमाननिष्ठ कारणतायाश्च निरूपितत्वं संबंधः । तथाच अनुमितिनिष्ठ कार्यता निरूपित व्यापारसंबंधावच्छिन्न कारणत्वमनुमानस्य लक्षणम् ।

वन्हिव्याप्यो धूमः इत्याकारक अनुमाने (व्याप्तिज्ञाने) इदं लक्षणं वर्तते । कथमिति चेत् पर्वतो वन्हिमान् इति अनुमितिं प्रति वन्हिव्याप्यो धूमः इति व्याप्तिज्ञानस्य वह्निव्याप्यधूमवानयं पर्वतः इति परामर्शरूपव्यापारवत्तासंबंधेन कारणत्वात् लक्षणसमन्वयः ।

अत्र व्यापारत्वं नाम किमिति चेत् तज्जन्यत्वे सति तज्जन्य जनकत्वं । इदं खलु वन्हिव्याप्य धूमबानयं पर्वतः इति परामर्शे व्यापारत्वं वर्तते । तत्कथमिति चेत् तत् व्याप्तिज्ञानं तेन परामर्शो जायते । अतः तज्जन्यत्वं परामर्शे वर्तते । एवं तत् व्याप्तिज्ञानं तेन अनुमितिर्जायते । तादृशअनुमितिं प्रति जनकः परामर्शः ।

अनुमानलक्षणस्य अनुमितिघटितत्वात् अनुमितिज्ञानं विना अनुमानज्ञ.नं न संभवति । घटितज्ञानं प्रति घटकज्ञ.नल्यावश्यकत्वात् । अनुमितिमाह ।

# अनुमितिनिरूपणम्

## परामर्शजन्यं ज्ञानं अनुमितिः ।

परार्शज्जन्यं परामर्शजन्यं इति विग्रहः । पञ्चम्याः जनकत्व मर्थः । परामर्शस्याधेयतासंबंधेन जनकतायामन्वयः जन्यपदस्य जन्यता वती अर्थः । जनकतायाः निरूपितत्व संबंधेन जत्यतावदित्येकदेश जन्यतायामन्वयः । जन्यतावत्याः अभेद संवंधेन अनुमितावन्वयः । ज्ञानस्यापि अभेदसंबंधेन अनुमितावन्वयः ।

तथाच परामर्शनिष्ठजनकतानिरूपितजन्यतावदभिन्ना ज्ञानाभिन्ना अनुमितिः ।

परामर्शजन्यत्वे सति ज्ञानत्वं अनुमितेर्लक्षणम् । अनुमितौ लक्षणसमन्वयः । वन्हिव्याप्यधूमवानयं पर्वतः इति परामर्शात् पर्वतो वन्हिमानित्याकारक अनुमितिः जायते । परामर्शः जनकः । जनकता परामर्शनिष्ठा । जन्या अनुमितिः । जन्यता अनुमिति निष्ठा । तयोर्निरूपितत्वं संबंधः । ज्ञानत्वंच पर्वतो वन्हिमानित्याकारक अनुमितौ वर्तते इति लक्षणसमन्वयः ।

दलकृत्यं–ज्ञानत्वमात्रोक्तौ प्रत्यक्षेऽतिव्याप्तिः। प्रत्यक्षस्यापि ज्ञानत्वात्। अतः विशेषणदलं देयम्। प्रत्यक्षस्य परामर्शजन्यत्वाभावान्नातिव्याप्तिः।

विशेषणमात्रोपादाने परामर्शध्वंसेऽतिव्याप्तिः। ध्वंसं प्रति प्रतियोगिनः कारणत्वात्। परामर्शध्वंसं प्रति परामर्शस्य कारणत्वादतिव्याप्तिः। अतः लक्षणे ज्ञानत्वं निवेशनीयम्। परामर्शध्वंसे ज्ञानत्वाभावान्नातिव्याप्तिः।

# परामर्शनिरूपणम्

अनुमितिलक्षणस्य परामर्शघटितत्वेन परामर्श ज्ञानं विना अनुमितिज्ञानं न संभवति। कुतः इति चेत् घटितज्ञानं प्रति घटक ज्ञानस्यावश्यकत्वात् अतः परामर्शस्य लक्षणमाह।

## व्याप्तिविशिष्ठ पक्षधर्मताज्ञानं परामर्शः ।

व्याप्त्या विशिष्टं व्याप्तिविशिटं। पक्षधर्मताया ज्ञानम् पक्षधर्मताज्ञानम्। व्याप्तिविशिष्टं च तत् पक्षधर्मताज्ञानं च व्याप्ति विशिष्टपक्षधर्मताज्ञानमितिविग्रहः। अत्र शाब्दबोधप्रकारस्तु इत्थम्।

पक्षधर्मतायाः इत्यत्र षष्ठयाः विशेष्यत्वमर्थः। पक्षधर्मतायाः आधेयता संबंधेन विशेष्यतायामन्वयः विशेष्यताया निरूपकत्वसंबंधेन ज्ञानेऽन्वयः। तथाच पक्षधर्मतानिष्ट विशेष्यतानिरूपक ज्ञानम्।

विशिष्ट पदस्य प्रकारता निरूपकमर्थः। व्याप्तेः आधेयता संबंधेन प्रकारतायामन्वयः। तथा च व्याप्तिनिष्ठ प्रकारतानिरूपकं। ययोः पदयोः कर्मधारयः तदर्थयोरभेदेनाऽन्वयः इति नियमात् व्याप्ति निष्ठ प्रकारता निरूपकस्याभेदसंबंधेन पक्षधर्मतानिष्ठ विशेष्यता निरूपक ज्ञानेऽन्वयः। तथाच व्याप्तिनिष्ठ प्रकारता निरूपकाभिन्नं पक्ष धर्मतानिष्ठ विशेष्यता निरूपक ज्ञानं परामर्शः इति शाब्दबोधः।

. पक्षधर्मतानिष्ठबिशेष्यतानिरूपितहेतुनिष्ठप्रकारता निरूपित व्याप्ति निष्ठप्रकारताशालिज्ञानत्वं परामर्शस्य लक्षणम् ।

**यथा वन्हिव्याप्यधूमवानयं पर्वत इति ज्ञानं परामर्शः ।**

तत्र ज्ञाने पक्षे (पर्वते) हेतुः (धुमः) प्रकारतया भासते । हेतौ (धूमे) व्याप्तिः प्रकारतया भासते । अतः पक्षनिष्ठ विशेष्यता निरूपित हेतुनिष्ठप्रकारतानिरूपितव्याप्तिनिष्ठप्रकारताशालिज्ञानत्वं वह्निव्याप्यधूमवानयं पर्वतः इत्याकारक ज्ञाने वर्तते इति लक्षण समन्वयः ।

**तज्जन्यं पर्वतो वन्हिमानिति ज्ञानमनुमितिः ।**

तस्माज्जन्यं तज्जन्यं । तच्छब्दस्य परामर्श इत्यर्थः । परा मर्शनिष्ट जनकता निरूपित जन्यतावदभिन्ना ज्ञानाभिन्ना अनुमितिः ।

# व्याप्तिनिरूपणम

अथ व्याप्ति निरूपयति

**यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः**

सह चरत इति सहचरौ सहचरयोर्भावः साहचर्यं (सामाना धिकरण्यम्) तस्य नियमः साहचर्यनियमः । नियमपदस्य अवश्यं भावः अर्थः । तथाच अवश्यं भावि साध्यसामानाधिकरण्यं हेतोर्व्याप्तिः।

# अनुमानविभागनिरूपणं

**अनुमान द्विविधं स्वार्थं परार्थं चेति ।**

शाब्दबोधप्रकारस्तु पुर्ववद्बोध्यम् । स्वार्थानुमानत्व परार्थानु मानत्वाभिन्न द्वित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतरवदभिन्नं अनुमानम् ।

# स्वार्थानुमाननिरूपणम्

स्वार्थानुमानं निरूपयति ।

## स्वार्थं स्वानुमितिहेतुः

स्वस्यानुमितिः स्वानुमितिः । तस्य हेतुः स्वानुमितिहेतुः । स्वशब्दस्य स्वं इत्यर्थः । षष्ठ्याः समवेतत्वमर्थः । स्व शब्दार्थस्य निरूपितत्वसंबंधेन समवायसंबंधावच्छिन्न आधेयत्वेऽन्वयः । आधेयत्व स्याश्रयतासंबंधेन अनुमितौ अन्वयः । स्वनिरूपित समवाय संबंधा वच्छिन्न आधेयत्वाश्रया अनुमितिः ।

स्वानुमितेरित्यत्र षष्ठ्याः कार्यत्वमर्थः । कार्यतायाः निरूपितत्व संबंधेन हेतुशब्दार्थं कारणतायामन्वयः । तथाच स्वनिरूपित समवाय संबंधावच्छिन्न आधेयत्वाश्रय अनुमितिनिष्ठ कार्यता निरूपित कारण तावदभिन्नं अनुमानं स्वार्थानुमानम् ।

तथा हि । स्वयमेव भूयोदर्शनेन यत्र धूमस्तत्राग्निरिति महा नसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतः तद्गते च पर्वते धूमं पश्यन् असौ संदिहानः व्याप्तिं स्मरति यत्र धूमस्तत्राग्निरिति ।

तद्गते तस्मिन् गतं तद्गतं तच्छब्दस्य पर्वत इत्यर्थः । गत शब्दस्य आधेयत्वमर्थः । पर्वतस्य निरूपितत्वसंबंधेन आधेयत्वेऽन्वयः । आधेयत्वस्याश्रयता सम्बंधेन वन्हावन्वयः । तथाच पर्वतनिरूपित आधेयत्वाश्रयः वन्हिः । वन्हावित्यत्र सप्तम्याः विषयत्वमर्थः । वन्हे राधेयता सम्बधेन विषयतायामन्वयः । पर्वत निरूपित आधेयत्वाश्रय वन्हिनिष्ठ विषयता ।

तस्याः निरूपकत्वसम्बधेन सन्देहशब्दार्थज्ञानेऽन्वयः । पर्वत निरूपित आधेयत्वाश्रयवन्हिनिष्ठ विषयता निरूपक ज्ञानवान् सन् । पर्वते इत्यत्र पर्वतशब्दस्य पर्वत इत्यर्थः । सप्तम्याः विशेष्य त्वमर्थः । पर्वतस्य आधेयता संबंधेन विशेष्यतायामन्वयः । पर्वत निष्ठ विशेष्यता ।

पश्यन् इत्यत्र दृशिधातोश्चाक्षुषप्रत्यक्षं इत्यर्थः । पर्वतनिष्ठ विशेष्यताया निरूपकत्वसंबंधेन चाक्षुषप्रत्यक्षे अन्वयः ।

धूममित्यत्र धूमशब्दस्य धूम इत्यर्थः । द्वितीयाया प्रकारत्वमर्थः । धूमस्याधेयतासम्बंधेन प्रकारतायामन्वयः । धूमनिष्ठ प्रकारतायाः निरूपकत्वसम्बन्धेन चाक्षुषप्रत्यक्षे अन्वयः ।

तथा च पर्वतनिष्ठविशेष्यतानिरूपक धूमनिष्ठ प्रकारतानिरूपक चाक्षुषप्रत्यक्षवान् सन् धूमवान् पर्वतः इत्याकारक ज्ञानवान् सन् व्याप्तिनिष्ठ विषयतानिरूपक स्मृतिनिरूपकज्ञानाश्रयः ।

तदनंतरं वन्हिव्याप्यधूमवानयं पर्वत इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात् पर्वतो वन्हिमान् इति अनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् ।

# अथ परार्थानुमानम्

परार्थानुमानं निरूपयति यत्तु इति ।

**त. स मूल–**

" यत्तु स्वयमेव धूमादग्निमनुमाय परप्रतिपत्यर्थं पञ्चावयववाक्यं प्रयुंक्ते तत्परार्थानुमानम् । यथा पर्वतो वन्हिमान् धूमवत्त्वात्, यो यो धूमवान् सोऽग्निमान् यथा महानसः, तथा चायम्, तस्मात्तथा इति । अनेन वाक्येन प्रतिपादितात्लिंगात्परोऽप्यग्निं प्रतिपद्यते । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः । पर्वतो वन्हिमान् इति प्रतिज्ञा । धूमवत्त्वात् इति हेतुः । यो यो धूमवान् सोऽग्निमान् यथा महानस इत्युदाहरणम् । तथा चायं इत्युपनयः । तस्मात्तथेति निगमनम् । स्वार्थानुमितिपरार्थानुमित्योः लिंगपरामर्श एव कारणम् । तस्माल्लिंग परामर्शोऽनुमानम् ।

लिंग त्रिविधम् । अन्वयव्यतिरेकि, केवलान्वयि केवलव्यतिरेकि चेति । "

अन्वयव्यतिरेकित्व केवलान्वयित्व केवलव्यतिरेकित्वाभिन्न त्रित्व संख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमवदभिन्नं लिंगम् ।

# अन्वयव्यतिरेकिनिरूपणम्

**त. स. मूल–** अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि। यथा वन्हौ साध्ये धूमवत्त्वम्।

यत्र धूमस्तत्राग्निः यथा महानसः इत्यन्वयव्याप्तिः। यत्र वन्हिर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रदः इति व्यतिरेकव्याप्तिः।

अन्वयाभिन्न व्यतिरेकाभिन्न व्याप्तिनिष्ठ आधेयता निरूपित अधिकरणतावदभिन्नं लिंगं अन्वयव्यतिरेकि इति शाब्दबोधः।

हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः (यत्र धूमस्तत्राग्निरिति) साध्याभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः (यत्र वन्हिर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रदः।)

अन्वयव्याप्तिमत्वे सति व्यतिरेकव्याप्तिमत्वं अन्वयव्यतिरेकि लक्षणम्।

धूमे चेदं लक्षणं वर्तते। अन्यत्र व्याप्तिमत्वाद्व्यतिरेकव्याप्तिमत्वात्।

अन्वयव्याप्तिमत्वं इत्येवोक्तौ केवलान्वयिलिंगे अतिव्याप्तिः। कुतः इति चेत् केवलान्वयिलिंगें अन्वयव्याप्तिसद्भावात् अतिव्याप्तिः। अतः व्यतिरेकव्याप्तिमत्वं लक्षणे निवेशनीयम्। केवलान्वयिलिंगे च व्यतिरेकव्याप्त्याभावन्नातिव्याप्ति.।

व्यतिरेकव्याप्तिमत्वं इत्येवोक्तौ केवलव्यतिरेकिलिंगेऽतिव्याप्तिः। कुतः इति चेत् केवलव्यतिरेकिलिंगे व्यतिरेकव्याप्तेः सद्भावादतिव्याप्तिः। अतः अन्वयव्याप्तिमत्वं निवेशनीयम्। केवलव्यतिरेकि लिंगे च अन्वयव्याप्तिमत्वाभावान्नातिव्याप्तिः।

# केवलान्वयिनिरूपणम्

**त. स. मूल**अन्वयमात्रव्याप्तिकं केवलान्वयि। घटोऽभिधेयः प्रमेयत्वात् पटवत् इति। अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च।

यत्र लिंगे केवलं अन्वयव्याप्तिरस्ति, व्यतिरेकव्याप्तिर्नास्ति तल्लिगं केवलान्वयि इत्युच्यते। व्यतिरेकव्याप्तिशून्यत्वे सति अन्वय व्याप्मित्वं केवलान्वयिलिंगस्य लक्षणम्।

यथा घटः अभिधेयः प्रमेयत्वात् इत्यत्र प्रमेयत्वं केवलान्वयि लिंगं। तत्र उक्तलक्षणं वर्तते। यत्र यत्र प्रमेयत्वं तत्र तत्र अभिधेयत्वं (यथा पटः) इति अन्वयव्याप्तिरस्ति। न तु व्यतिरेक व्याप्तिः। यत्र यत्र अभिधेयत्वाभावः तत्र तत्र प्रमेयत्वाभावः इति व्यतिरेकव्याप्तिर्नास्ति। कुतः इति चेत् अभिधेयत्वप्रमेयत्वयोः केवलान्वयित्वेन तदभावस्याप्रसिद्धत्वात्।

दलकृत्यं :—व्यतिरेकव्याप्तिशून्यत्वं केवलान्वयिलिंगस्य लक्षण मित्येवोक्तौ उदासीनघटपटादावतिव्याप्तिः। अतः अन्वयव्याप्तिमत्वं निवेशनीयं इदानीं नातिव्याप्तिः। कुतः इति चेत् घटपटादावन्वय-व्याप्तिमत्वाभावान्नातिव्याप्तिः।

अन्वयव्याप्तिमत्वं केवलान्वयिलिंगस्य लक्षणं इत्येवोक्तौ अन्वय व्यतिरेकिणि धूमेऽतिव्याप्तिः। कुतः इति चेत् अन्वयव्यतिरेकिणि धूमे अन्वयव्याप्तेः सद्भावादतिव्याप्तेः। अतः व्यतिरेकव्याप्तिशून्यत्वं निवेशनीयम्। धूमे च व्यतिरेकव्याप्तेः सद्भावात्। व्यतिरेकव्याप्ति शून्यत्वस्याभावान्नातिव्याप्तिः।

# केवलव्यतिरेकिनिरूपणम्

**व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि।**

यत्र लिंगे केवलं व्यतिरेकव्याप्तिरस्ति अन्वयव्याप्तिर्नास्ति तल्लिगं केवलव्यतिरेकि।

अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्वं केवलव्यतिरेक लिंगस्य लक्षणम्।

यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात्। यदितरेभ्यो न भिद्यते न तद् गन्धवत् यथा जलम्।

**यथा** पृथिवीतरेभ्यो गन्धत्वादित्यत्र गन्धत्वरूपलिंगे इदं लक्षणं **वर्तते।** कुतः इति चेत् **अत्र** साध्यः इतरभेदः। हेतुर्गन्धः। पक्षः **पृथिवी।** अत्र अन्वयव्याप्तिर्नास्ति दृष्टांताभावात्। गन्धस्य पृथि- **व्यामेव सत्वात्** जलादिकं न दृष्टांतो भवति। पृथिव्याश्च पक्षत्वेन **साऽपि दृष्टांतो** न भवति। अतः अन्वयव्याप्तिः नास्ति।

**अत्र** व्यतिरेकव्याप्तिरेवास्ति। यत्र यत्र इतरभेदाभावः तत्र **गन्धाभावः** इति व्यतिरेकव्याप्तिः जलादिषु वर्तते। तत्कथमिति **चेत्** पृथिवीतरभेदः पृथिव्यामेव वर्तते। न तु जलादिषु। अतः पृथिवीतरभेदाभावः जलादिषु वर्तते। तत्र गन्धाभावोऽपि वर्तते इति **लक्षणसमन्वयः।**

**दलकृत्यं** :– अन्वयव्याप्तिशून्यत्वं केवलव्यतिरेकिलिंगस्य लक्षण **मित्येवोक्तौ** उदासीनघटपटादौ अतिव्याप्तिः। अतः व्यतिरेकव्याप्ति **मत्वं निवेशनीयम्।** इदानीं नातिव्याप्तिः कुतः इति चेत् घटपटादौ **व्यतिरेकव्याप्तिमत्वाभावान्नातिव्याप्तिः।**

**व्यतिरेकव्याप्तिमत्वं** केवलव्यतिरेकिलिंगस्य लक्षणमित्येवोक्तौ **अन्वयव्यतिरेकिणि** धूमे अन्वयव्याप्तेः व्यतिरेकव्याप्तेश्च सद्भावादति **व्याप्तिः।** अतः अन्वयव्याप्तिशून्यत्वं निवेशनीयम्। धूमे च अन्वय व्याप्तेः सद्भावादन्वयव्याप्तिशून्यत्वस्याभावान्नातिव्याप्तिः।

यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलं इत्यत्र शाब्द बोधप्रकारस्तु **इत्थम्।** **इतरेभ्यो** इत्यत्र जलादिभ्यः इत्यर्थः। पञ्चम्याः प्रतियोगित्वमर्थः। जलादेराधेयतासम्बन्धेन प्रतियोगिता यामन्वयः। जलादिनिष्ठप्रतियोगिता। प्रतियोगितायाः निरूपकत्व सम्बन्धेन भिद्यते इत्यत्र भिदलृ धात्वर्थ भेदेऽन्वयः। भेदस्य स्वनिष्ठ प्रतियोगितानिरूपकत्वसम्बन्धेन नञर्थ अभावेऽन्वयः। अभावस्य तङ् प्रत्ययार्थ आश्रयतासम्बन्धेन यत्पदार्थेऽन्वयः।

गन्धवतः स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेन नञ् शब्दार्थ भेदेऽन्वयः।

तथा च जलादिनिष्ठ प्रतियोगितानिरूपक भेदनिष्ठ प्रतियोगिता निरूपक अभावाश्रय: यत् गन्धनिष्ठप्रतियोगितानिरूपकभेदवत् ।

तथा च यदितरभेदाभाववत् तद्गन्धाभाववत् ।

न चेयं तथा । तस्मान्न तथेति । अत्र यद्गन्धवत्तदितरभिन्नं इत्यन्वयदृष्टांतो नास्ति पृथिवीमात्रस्य पक्षत्वात् ।

# अथ पक्षनिरूपणं

**सन्दिग्धसाध्यवान्पक्ष: ।**

सन्दिग्धं च तत् साध्यं च सन्दिग्धसाध्यं । सन्दिग्धसाध्यं अस्यास्तीति सन्दिग्धसाध्यवान् । इति विग्रह: ।

साध्यप्रकारक सन्देहविशेष्यत्वं पक्षस्य लक्षणम् । पर्वतो वन्हिमान्धूमादित्यनुमाने अनुमिते: प्राक् पर्वत: वन्हिमान्नवा इति पर्वते वन्हितदभावयो: सन्देह: नियमेन वर्तते । अत: साध्यप्रकारक सन्देह विशेष्यत्वं पर्वतेऽस्तीति लक्षणसंगति: ।

# सपक्षनिरूपणम्

सपक्षं निरूपयति ।

**निश्चितसाध्यवान्सपक्ष: ।**

निश्चितं साध्यं अस्यास्तीति निश्चितसाध्यवान् इति विग्रह: । साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षस्य लक्षणं । साध्यप्रकारक यो निश्चय: महानस: वन्हिमानिति निश्चय: । तादृशनिश्चये महानस: विशेष्य: । अत: विशेष्यत्वं महानसे वर्तते इति लक्षणसंगति: ।

# अथ विपक्षनिरूपणम्

**निश्चितसाध्याभाववान् विपक्ष: ।**

निश्चित: साध्याभाव: अस्यास्तीति निश्चितसाध्याभाववान् इति विग्रह: । साध्याभावप्रकारक निश्चयविशेष्यत्वं विपक्षस्य लक्षणं ।

साध्याभाव प्रकारक यो निश्चयः महाह्रदः वन्ह्यभाववान् इति निश्चयः। महाह्रदः विशेष्यः। तत्र महाह्रदे विशेष्यत्वं अस्तीति लक्षणसंगतिः।

# अथ हेत्वाभासनिरूपणं

अथ दुष्टहेतून् निरूपयति सव्यभिचारेति।

**सव्यभिचारविरुद्ध सत्प्रतिपक्षासिद्धबाधिताः पंच हेत्वाभासाः।**

सव्यभिचारश्च विरुद्धश्च सत्प्रतिपक्षश्चासिद्धश्च बाधितश्च सव्यभिचार विरुद्ध सत्प्रतिपक्षासिद्धबाधिताः इति विग्रहः। हेतुवदा भासन्ते इति हेत्वाभासाः। हेत्वाभासा इत्यस्य दुष्टहेतवः अर्थः। पञ्चपदस्य लक्षणया पञ्चत्व संख्यापर्याप्त्यधिकरण विभाजकधर्मान्य तमवन्तः इति अर्थः। तेषामभेदसम्बन्धेन दुष्टहेतुषु अन्वयः। सव्यभि चारादि पदस्य लक्षणया सव्यभिचारत्व विरुद्धत्व सत्प्रतिपक्षत्वासिद्धत्व बाधितत्वान्यतमः अर्थः। तस्याभेदसम्बन्धेन विभाजक धर्मान्यतम-स्मिन्नन्वयः।

तथा च सव्यभिचारत्वादि बाधितत्वांतान्यतमाभिन्न पञ्चत्व संख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमवदभिन्नाः दुष्टहेतवः।

# सव्यभिचारनिरूपणं

अथ प्रथमप्राप्तं सव्यभिचारं विभजते।

**सव्यभिचारोऽनैकान्तिकः। स त्रिविधः साधारणासाधा रणानुपसंहारिभेदात्।**

साधारणासाधारणानुपसंहारिणां भेदः। तस्मात् अनुपसंहारिणा मित्यत्र षष्ठ्याः आधेयत्वमर्थः। अनुपसंहारिणां निरूपितत्वसम्बन्धेन आधेयत्वे अन्वयः। आधेयत्वस्याश्रयतासम्बन्धेन भेद शब्दार्थे असा धारणधर्मेऽन्वयः। असाधारण धर्मस्य पञ्चम्यर्थं अभेदसम्बन्धेन त्रित्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमस्मिन्नन्वयः।

तथा च साधारणासाधारणानुपसंहारि निरूपित आधेयत्वाश्रय असाधारणधर्माभिन्न त्रित्वसंख्यापर्याप्त्यधिकरण विभाजकधर्मान्यतमवद भिन्नः अनैकांतिकः ।

# साधारणनिरूपणं

**तत्र साध्याभाववद्वृत्तिः साधारणः ।**

तत्र इत्यत्र साधारणादिसमुदायनिरूपित घटकत्वाश्रयः साधारणः ।

साध्यस्याभावः साध्याभावः । साध्याभावः अस्मिन्नस्तीति साध्याभाववान् । साध्याभाववति वृत्तिः यस्यसः साध्याभाववद्वृत्तिः । इति विग्रहः ।

साध्यस्य आधेयतासम्बन्धेन षष्ठ्यर्थं प्रतियोगितायामन्वयः । साध्यनिष्ठप्रतियोगिता । साध्यनिष्ठ प्रतियोगिताया निरूपकत्वसंबंधेन अभावेऽन्वयः । साध्यनिष्ठ प्रतियोगितानिरूपक अभावः ।

अस्मिन्नित्यत्र इदं शब्दस्य यत्किञ्चिद्वस्तु इत्यर्थः । सप्तम्या अधिकरणत्वमर्थः । इदं शब्दस्यआधेयतासम्बन्धेन अधिकरणतायाः मन्वयः । तथा च यत्किञ्चिद्वस्तुनिष्ठ अधिकरणता । अस् धातो आधेयत्वमर्थः । अधिकरणतायाः निरूपितत्वसम्बन्धेन आधेयत्वेऽन्वयः । आधेयत्वस्य ति प्रत्ययार्थ आश्रयतासम्बन्धेन अभावेऽन्वयः ।

यत्किञ्चिद्वस्तुनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रय अभावः । इति विग्रहवाक्यजन्य शाब्दबोधः । समासवाक्यात् तु साध्याभावनिष्ठ आधेयतानिरूपित अधिकरणतावान् ।

साध्याभाववति इत्यत्र सप्तम्या अधिकरणत्वमर्थः । साध्याभाव निष्ठ आधेयतानिरूपित अधिकरणतावतः आधेयतासम्बन्धेन अधिकरण तायामन्वयः । अधिकरणताया निरूपितत्वसम्बन्धेन वृत्ति शब्दार्थ आधेयत्वेऽन्वयः ।

तथा च साध्याभावनिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ अधिकरणतानिरूपित आधेयत्वम् ।

यस्य इत्यत्र यच्छब्दस्य यत्किञ्चिद्वस्तु इत्यर्थः। षष्ठ्या आधेयत्वमर्थः। यत्किञ्चिद्वस्तुनः निरूपितत्वसम्बन्धेन आधेयत्वेऽन्वयः। आधेयत्वस्य आश्रयतासम्बन्धेन वृत्तिशब्दार्थआधेयत्वेऽन्वयः।

तथा च साध्याभावनिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ अधिकरणतानिरूपित आधेयत्वं यन्निरूपित आधेयत्वाश्रयः इति विग्रह वाक्यजन्यबोधः। समासवाक्यात्तु साध्याभावनिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ अधिकरणतानिरूपित आधेयतावान्। तस्याभेद सम्बन्धेन साधारण हेतावन्वयः।

तथा च साध्यनिष्ठ प्रतियोगितानिरूपक अभावनिष्ठ आधेयता निरूपित अधिकरणतावन्निष्ठ अधिकरणतानिरूपित आधेयतावदभिन्नः अनैकान्तिकः (साधारणः)।

अत्र अनैकान्तिक (साधारण) हेतोर्लक्षणसंगतिः। साध्यनिष्ठ प्रतियोगितानिरूपक अभावनिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ तदधिकरणता निरूपित आधेयता साधारण हेतोर्लक्षणम्।

यथा पर्वतो वन्हिमान् प्रमेयत्वादित्यत्र प्रमेयत्वहेतौ साधारणे वर्तते। तत्कथमिति चेत् अत्र साध्यं वन्हिः साध्याभावः वन्ह्यभावः साध्याभावनिष्ठ आधेयतानिरूपित अधिकरणतावान् महाहृदः। तत्र प्रमेयत्वं वर्तते। हृदनिष्ठ अधिकरणतानिरूपित आधेयत्वं प्रमेयत्वे वर्तते इति लक्षण समन्वयः। अत्र प्रमेयत्वस्य वन्ह्यभाववति (साध्याभाववति) हृदे विद्यमानत्वात्।

अत्र साध्यनिष्ठायां प्रतियोगितायां साध्यतावच्छेदक संबंधावच्छिन्नत्वं निवेशनीयम्। अन्यथा पर्वतो वन्हिमान्धूमादित्यत्र धूम-रूपसद्धेतौ अतिव्याप्तिः। तत्कथमिति चेत् पर्वते वन्हिः संयोग संबंधेन वर्तते। न तु समवायसंबंधेन अतः समवायसंबंधावच्छिन्न वन्हिनिष्ठ प्रतियोगितानिरूपक अभाववान् पर्वतः। तद्वृत्तित्वं धूमे वर्तते इति अतिव्याप्तिः।

अतः साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसंबंधावच्छिन्नत्वं निवेशनीयम् । तथाच साध्यनिष्ठ साध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगितानिरूपक अभावनिष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ अधिकरणतानिरूपित आधेयत्वं अनैकांतिकस्य लक्षणम् । इदानीं धूमे नातिव्याप्तिः । कथमिति चेत् पर्वते वन्हिः संयोगसंबंधेन साध्यते । अत्र साध्यतावच्छेदकसंबंधः संयोगसंबंधः । पर्वते साध्यतावच्छेदक संयोगसंबंधेन वन्हेः विद्यमानत्वत् साध्यतावच्छेदक संबंधावच्छिन्न साध्यनिष्ठ प्रतियोगितानिरूपक अभावः संयोगसंबंधावच्छिन्न वन्हिनिष्ठ प्रतियोगितानिरूपक अभावः पर्वते नास्ति । पर्वते वन्हिः संयोगसंबंधेन विद्यमानत्वान्नातिव्याप्तिः ।

एवमपि धूमरूपसद्धेतावतिव्याप्तिः । कुतः इति चेत् साध्यतावच्छेदक संबंधावच्छिन्न साध्यनिष्ठ प्रतियोगितानिरूपक संयोगसंबंधाव च्छिन्न वन्हिनिष्ठ प्रतियोगितानिरूपक अभावस्य पर्वते स्वरूपसंबंधेन अभावेऽपि कालिकसंबंधेन विद्यमानत्वात्साध्याभावनिष्ठ आधेयतानिरूपित अधिकरणतावान्पर्वतः तद्वृत्तित्वं धूमे वर्तते इति अतिव्याप्तिः ।

अतः साध्याभावनिष्ठ आधेयतायां स्वरूपसंबंधावच्छिन्नत्वं निवेशनीयम् । साध्यतावच्छेदक संबंधावच्छिन्न साध्यनिष्ठ प्रतियोगिता निरूपक अभावनिष्ठ स्वरूपसंबंधावच्छिन्न आधेयतानिरूपित आधेयत्वं साधारणानैकांतिकस्य लक्षणमित्युक्तं भवति । इदानीं धूमे नाति व्याप्तिः । पर्वते साध्याभावस्य कालिकसंबंधेन सत्वेऽपि स्वरूमसंबं–धेनाभावात् । साध्याभावनिष्ठ स्वरूपसंबंधावच्छिन्न आधेयतानिरूपित अधिकरणतावान् पर्वतो न भवति । किंतु हृदः भवति । तन्निरूपित आधेयत्वं धूमे नास्तीति नातिव्याप्तिः ।

एवमपि धूमरूपसद्धेतावतिव्याप्तिः । तत्कथमिति चेत् साध्या भावनिष्ठ आधेयतानिरूपित अधिकरणतावान् हृदः । तत्र हृदे धूमस्य कालिकसंबंधेन विद्यमानत्वादतिव्याप्तिः । अतः साध्याभावनिष्ठ आधेयता निरूपित अधिकरणतावन्निष्ठ अधिकरणतानिरूपित आधेयतायां हेतु–

**तावच्छेदक संबंधावच्छिन्नत्वं** निवेशनीयम्। इदानीं धूमे नातिव्याप्तिः **कथमिति चेत्** साध्याभाववति ह्रदे कालिकसंबंधेन धूमस्य सत्वेऽपि हेतु **तावच्छेदक** संयोगसंबंधेनाभावात्। ह्रदनिष्ठ अधिकरणतानिरूपित **हेतुतावच्छेदक** संबंधावच्छिन्न आधेयत्वस्य धूमे अभावान्नातिव्याप्तिः।

**अत्र** निष्कृष्टलक्षणं तु साध्यतावच्छेदक संबंधावच्छिन्न साध्य **निष्ठ प्रतियोगितानिरूपक** अभावनिष्ठ आधेयतानिरूपित अधिकरण **तावन्निष्ठ** अधिकरणतानिरूपित हेतुतावच्छेदक संबंधावच्छिन्न आधे **यत्वं** साधारणानैकांतिकस्य लक्षणम्।

# असाधारणनिरूपणम्

**सर्वसपक्षविपक्षव्यावृत्तोऽसाधारणः।**

सर्वसपक्षावृत्तित्वे सति सर्वविपक्षावृत्तित्वे सति पक्षवृत्तित्वं असाधारणहेतोर्लक्षणम् –

शब्दो नित्यः शब्दत्वादित्यनुमाने असाधारण अनैकान्तिके उक्त-लक्षणं वर्तते। तत्कथमिति चेत्।

अत्र शब्दः पक्षः नित्यत्वं साध्यम्। शब्दत्वं हेतुः। सपक्षः आकाशादिः। विपक्षः घटादयः। सपक्षे आकाशादौ शब्दत्वं नास्ति। अतः सपक्षावृत्तित्वं आयातम्। एवं विपक्षे घटादौ शब्दत्वं नास्ति। अतः शब्दत्वे विपक्षावृत्तित्वं आयातम्। पक्षे शब्दे शब्दत्वं वर्तते इति लक्षणसमन्वयः।

# अनुपसंहारि निरूपणम्

**अन्वयव्यतिरेकदृष्टांतरहितोऽनुपसंहारी।**

यथा सर्वमनित्यं प्रमेयत्वादित्यनुमाने प्रमेयत्वरूपहेतौ अनुप संहारिदोषो वर्तते। अन्वयदृष्टांतरहितत्वे सति व्यतिरेकदृष्टांतरहित-त्वमनुपसंहारिदोषस्य लक्षणम्।

अत्रानुमाने सर्वं पक्षः। अनित्यत्वं साध्यम्। प्रमेयत्वं हेतुः। यत्र यत्र प्रमेयत्वं तत्र तत्र अनित्यत्वं इति अन्वयदृष्टांतो नास्ति सर्वस्यापि पक्षत्वात्। व्यतिरेकदृष्टांतोऽपि नास्ति। कुतः इति चेत् यत्र यत्र अनित्यत्वाभावः तत्र तत्र प्रमेयत्वाभावः इति व्यतिरेक व्याप्तिग्राहकदृष्टांतो नास्ति। अतः व्यतिरेकदृष्टांतरहितत्वात्प्रमेयत्वे हेतौ अनुपसंहारिलक्षणं वर्तते।

दलकृत्यं :–अन्वयदृष्टांतरहितत्वं अनुसंहारिणः लक्षणमित्येवोक्तौ पृथिवी इतरभिन्ना गन्धवत्वात् इति व्यतिरेकानुमाने गन्धत्वसद्धेतावति व्याप्तिः। कथमिति चेत्। यत्र यत्र गन्धवत्वं तत्र तत्र इतरभेदः इति अन्वयव्याप्तिग्राहकान्वयदृष्टांताभावात् अतिव्याप्तिः।

अतः व्यतिरेकदृष्टांतरहितत्वं निवेशनीयम्। इदानीं नाति व्याप्तिः। यत्र यत्र इतरभेदाभावः तत्र तत्र गन्धाभावः जलवत् इति व्यतिरेकदृष्टांतो वर्तते। व्यतिरेकदृष्टांतरहितत्वाभावान्नातिव्याप्तिः।

व्यतिरेकदृष्टांतरहितत्वमात्रोक्तौ घटोऽभिधेयः प्रमेयत्वादिति केवलान्वयिहेतौ अतिव्याप्तिः। यत्र यत्र अभिधेयत्वाभावः तत्र तत्र प्रमेयत्वाभावः इति व्यतिरेकव्याप्तिग्राहकदृष्टांतो नास्ति। प्रमेयत्वा-भिधेयत्वयोः केवलान्वयित्वेन तदभावस्याप्रसिद्धत्वादतिव्याप्तिः। अतः अन्वयदृष्टांतरहितत्वं निवेशनीयम्। तन्निवेशे तु नातिव्याप्तिः। यत्र यत्र प्रमेयत्वं तत्र तत्र अभिधेयत्वं पटवत् इति अन्वयदृष्टांतो वर्तते। अतः उक्तहेतौ अन्वयदृष्टांतरहितत्वाभावान्नातिव्याप्तिः।

# विरुद्धनिरूपणम्

**साध्याभावव्याप्तो हेतुर्विरुद्धः। यथा शब्दो नित्यः कार्यत्वात्।**

साध्यस्याभावः साध्याभावः। तेन व्याप्तः साध्याभावव्याप्तः। साध्याभावव्याप्तश्चासौ हेतुश्च साध्याभावव्याप्तो हेतुः इति विग्रहः।

साध्यस्य आधेयतासंबंधेन षष्ठ्यर्थे प्रतियोगितायां अन्वयः। साध्यनिष्ठप्रतियोगिता। प्रतियोगितायाः निरूपकत्वसंबंधेन अभावे

**अन्वया ।** साध्यरिष्ठतियोगितानिरूपकाभावः । अभावेन इत्यत्र **तृतीयायाः निरूपितत्वमर्थः ।** व्याप्तः इत्यत्र व्याप्तिमानर्थः ।

**साध्याभावस्य** तृतीयार्थं निरूपितत्वसंबंधेन व्याप्तिमानित्येकदेश **व्याप्तावन्वयः ।** माध्याभावनिरूपित व्याप्तिमान् । व्याप्तिमतः **अभेदसंबंधेन** हेतावन्वयः । साध्यनिष्ठप्रतियोगितानिरूपक अभावनिरू **पित** व्याप्तिमदभिन्नः हेतुर्विरुद्धाभिन्नः ।

**साध्यनिष्ठप्रतियोगितानिरूपक** अभावनिरूपित व्याप्तिमत्वं **विरुद्धस्य** लक्षणम् ।

यथा शब्दो नित्यः कार्यत्वात् घटवत् इत्यनुमाने कार्यत्वरूपहेतौ **लक्षणसमन्वयः ।** अत्रानुमाने शब्दः पक्षः, नित्यत्वं साध्यम् । कार्यत्वं हेतुः । यत्र यत्र कार्यत्वं तत्र तत्र नित्यत्वाभाव यथा घटवत् इति ।

कार्यत्वहेतौ नित्यत्वाभावनिरूपित व्याप्तिमत्वलक्षणसद्भावात् **लक्षणसमन्वयः ।**

# सत्प्रतिपक्षनिरूपणं

**यस्य साध्याभावसाधक हेत्वन्तरं विद्यते सः सत्प्रतिपक्षः। यथा शब्दोनित्यः श्रावणत्वात् ।**

सन् विद्यमानः प्रतिपक्षः साध्याभावमाधकः अन्यो हेतुः यस्य सः इति विग्रहः ।

अनेन वाक्येन सत्प्रतिपक्षस्य लक्षणमुच्यते । तत्कथमिति चेत् माध्याभावसाधकहेत्वन्तरकत्वं सत्प्रतिपक्षस्य लक्षणम् । अत्र माध्यं नित्यत्वं । साध्याभावः नित्यत्वाभावः । साध्याभावसाधकः यो अन्यो हेतुः कार्यत्वहेतुः । तत्कत्वात् श्रावणत्वहेतुः सत्प्रतिपक्ष दोपयुक्तः इत्युच्यते ।

# असिद्धिनिरूपणं

**आश्रायसिद्धस्त्रिविधः। आश्रयासिद्धो यथा गगनारविंदं सुरभि अरविंदत्वात् यथा सरोजारविन्दवत्।**

अत्रानुमाने गगनारविंदं पक्षः। सुरभित्वं साध्यम्। अरविंदत्वं हेतुः। सरोजारविंदं दृष्टांतः। सरोजारविंदे अरविंदत्वहेतोः सत्वात् तत्र सुरभित्वं यथा वर्तते तथा गगनारविंदेऽपि अरविंदत्व-सद्भावात्सुरभित्वं साधयामः। इत्युक्ते अत्र अरविन्दत्वं हेतुः आश्रया सिद्धो भवति।

आश्रये (पक्षे) असिद्धिः (पक्षतावच्छेदकस्याभावो) यस्य सः। आश्रये पक्षे पक्षतावच्छेदकस्याभावो वर्तते। अतः पक्षतावच्छेदका-भाववत्पक्षकत्वं आश्रयासिद्धस्य लक्षणम्। अत्र अरविंदत्वहेतौ उक्त लक्षणं वर्तते। कथमिति चेत् अत्र गगनारविंदं पक्षः। पक्षताव च्छेदकं गगनारविंदत्वं (गगनीयत्वं गगनवृत्तित्वं)।

पक्षतावच्छेदकः गगनवृत्तित्वं पक्षे अरविंदे नास्ति। अतः गगन वृत्तित्वपक्षतावच्छेदकाभाववत्पक्षः गगनारविंदम्। तद्वान् अरविंद हेतुः आश्रयसिद्धिदोषयुक्तः इत्युच्यते।

**स्वरूपसिद्धो यथा शब्दो गुणः चाक्षुषत्वात्।**

अत्रानुमाने शब्दः पक्षः। साध्यं गुणत्वम्। हेतुश्चाक्षुषत्वं (चक्षुरिंद्रियजन्यज्ञानविषयत्वं)। तच्च शब्दे नास्ति किंतु श्रावणत्वं (श्रवणेंद्रियजन्यज्ञानबिषयत्वं) वर्तते। अतः हेत्वभाववत्पक्षः (चाक्षु-षत्वाभाववत् शब्दः) तद्वत्वात् पक्षवत्वात् चाक्षुषत्वहेतुः स्वरूपासिद्धि दोषयुक्तो इत्युच्यते।

**सोपाधिको व्याप्यत्वासिद्धः।**

उपाधिना सहितः सोपाधिकः। स चासौ व्याप्यत्वासिद्धश्च सोपाधिको व्याप्यत्बासिद्धः। उपाधिविशिष्टहेतुः व्याप्यत्वासिद्धः।

साध्यव्यापकत्वे सति साधनाव्यापकः उपाधिः।

साध्यसमानाधिकरणात्यंताभावाप्रतियोगित्वं साध्यव्यापकत्वम् ।

साधनवन्निष्ठात्यंताभावप्रतियोगित्वं साधनाव्यापकम् ।

पर्वतो धूमवान् वन्हेः इत्यत्र आर्द्रेन्धनसंयोगः उपाधिः। यत्र धूमस्तत्रार्द्रेधनसंयोगः इति साध्यव्याकता।

यत्र वन्हिस्तत्रार्द्रेधनसंयोगः इति नास्ति। अयोगोलके आर्द्रेधन संयोगाभावात् ।

एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वं । उपाधिः आर्द्रेधन संयोगः। सोपाधिकत्वाद्वन्हिमत्वं व्याप्यत्वासिद्धम् ।

पर्वतो धूमवान् वन्हेः इत्यनुमाने वन्हिमत्वरूपहेतोः आर्द्रेधनसंयोगरूप उपाधिसहितत्वात् व्याप्यत्वासिद्धः इत्युच्यते ।

साध्यव्यापकत्वे सति साध्यव्यापकत्वं उपाधेर्लक्षणम्।

साध्यव्यापकत्वं नाम साध्यसमानाधिकरणात्यंताभावाप्रतियोगि – त्वम्। पूर्वोक्तानुमाने साध्यं धूमः साध्याधिकरणं महानसादिः। तद्वृत्ति योऽभावः घटाभावः न हि आर्द्रेधनसंयोगाभावः। अभावप्रति योगि घटः। प्रतियोगित्वं घटे। अप्रतियोगित्वं आर्द्रेधनसंयोगे वर्तते।

साधनाव्यापकत्वं नाम साधनवन्निष्ठात्यंताभावप्रतियोगित्वं। अत्र अनुमाने साधनं वन्हिः। साधनाधिकरणं अयोगोलकम्। तन्निष्ठः यः अत्यंताभावः आर्द्रेधनसंयोगात्यंताभावः। अभावप्रतियोगित्वं आर्द्रेधन संयोगे वर्तते इति आर्द्रेधनसंयोग उक्तानुमाने उपाधिर्भवति। एतादृश उपाधिमत्वात् वन्हिरूपहेतुर्व्याप्यत्वसिद्धः।

# बाधितनिरूपणं

**यस्य साध्याभावः प्रमाणान्तरेण निश्चितः सः बाधितः।**
**यथा वन्हिरनुष्णः पदार्थत्वात्**

अत्रानुष्णत्वं साध्यम्। तदभावः उष्णत्वम्। स्पर्शनप्रत्यक्षेण ह्यगृते इति बोध्यम्।

अत्र वन्हौ पक्षे अनुष्णत्वे साध्ये पदार्थत्वरूपहेतुर्बाधितः। अनेन वाक्येन बाधितस्य लक्षणं उच्यते। तत्किमिति चेत् प्रमाणांतर जन्यनिश्चयविषयीभूताभावप्रतियोगि साध्यकत्वं बाधितस्य लक्षणम्।

प्रमाणांतरं त्वगिंद्रियम्। तज्जन्यः यः निश्चयः वन्हिरनुष्णत्वाभाववान् इति निश्चयः तद्विविषयीभूतः अभावः अनुष्णत्वाभावः। तस्य प्रतियोगि अनुष्णत्वम्। अनुष्णत्वरूपसाध्यवत्वात्पदार्थत्वहेतुः बाधितः इत्युच्यते।

॥ इति तर्कसंग्रहे अनुमानपरिच्छेदः समाप्तः ॥

# अथ उपमानपरिच्छेदः

## उपमाननिरूपणं

**त. स. मूल–**

उपमितिकरणमुपमानम्। संज्ञासंज्ञिसंबंधज्ञानमुपमितिः। तत्करणं सादृश्यज्ञानम्। तथा हि। कश्चिद्गवयशब्दार्थमजानन् कुतश्चिदारण्यकपुरुषात् गोसदृशो गवयः इति श्रुत्वा वनं गतो गोसदृशपिंडं पश्यन् वाक्यार्थं स्मरति। तदनंतरं अयं गवयपदवाच्यः इत्युपमितिः उत्पद्यते।

व्याख्यातमुपमानम्

अत्र अयं गवयपदवाच्यः इति गवयपदवाच्यत्वप्रकारक इदं पदार्थविशेष्यक ज्ञानमुपमितिः। एतादृश उपमितिं प्रति गोसदृशो गवय इति गोसदृशप्रकारक गवयविशेष्यक उपमानं कारणम्। कार्यमुपमितिः कार्यता उपमितिनिष्ठा। कारणं उपमानम्। कारणता उपमाननिष्ठा। तयोर्निरूपितत्वसंबंधः। तथा च उपमाननिष्ठ कार्यता निरूपितकारणत्वं गोसदृशः गवय इत्याकारक गोसादृश्यप्रकारक गवय विशेष्यक स्मृत्यात्मकज्ञाने वर्तते इति लक्षणसमन्वयः।

इत्युपमानपरिच्छेदः समाप्तः।

# अथ शब्दपरिच्छेदः

## अथ शब्दनिरूपणं

**आप्तवाक्यं शब्दः ।**

अत्र शाब्दबोधप्रकारस्तु इत्थम् । आप्तस्य वाक्यं आप्तवाक्यं । षष्ठ्याः संबंधोऽर्थः । आप्तस्य स्वनिष्ठ प्रतियोगितानिरूपकत्वसंबंधेन षष्ठ्यर्थ संबंधेऽन्वयः । संबंधस्य आश्रयता संबंधेन वाक्येऽन्वयः । वाक्यस्य अभेद संबंधेन शब्दप्रमाणेऽन्वयः । तथा च आप्तनिष्ठ प्रतियोगितानिरूपक संबंधाश्रय वाक्याभिन्नः शब्दः । इदं खलु लक्षण वाक्यं अनेन वाक्येन शब्दप्रमाणस्य लक्षणमुच्यते । तत्किमिति चेत्–

आप्तनिष्ठ प्रतियोगितानिरूपक संबंधाश्रयवाक्यत्वं शब्दप्रमाणस्य लक्षणम् ।

आप्तोच्चरितत्वे सति वाक्यत्वं शब्दस्य लक्षणम् । "घटमानय" इति आप्तोच्चरित वाक्ये लक्षणसमन्वयः । तत्कथमिति चेत् घट मानय इति वाक्यं कश्चन आप्तः प्रयुक्ते । अत्र उच्चारणकर्ता आप्तः । उच्चारणविषयः वाक्यम् । अतः "घटमानय" इति वाक्ये आप्तकर्तृकोच्चरितत्वं (उच्चारणकर्मत्वं) वर्तते । एवं वाक्यत्वमपि वर्तते इति लक्षणसमन्वयः ।

दलकृत्यं :–अत्र वाक्यत्वं शब्दप्रमाणस्य लक्षणं इत्येवोक्तौ "नदीतीरे पञ्चफलानि संति इति अनाप्तोच्चरितवाक्ये अतिव्याप्तिः । तत्रापि वाक्यत्वसद्भावात् । अतः आप्तोच्चरितत्वं निवेशनीयम् । इदानीं "नदीतीरे पञ्चफलानि संति" इति अनाप्तोच्चरितवाक्ये (विप्रलंभकवाक्ये) आप्तोच्चरितत्वाभावात् नातिव्याप्तिः ।

आप्तोच्चरितत्वं शब्दप्रमाणस्य लक्षणं इत्येवोक्तौ "जवगडदश्" इत्यादि वर्णसमूहे अतिव्याप्तिः । अत्र आप्तोच्चरितत्वस्य सद्भावात् अतः वाक्यत्वं निवेशनीयम् । तत्र वाक्यत्वाभावात् नातिव्याप्तिः ।

ननु कोऽयमाप्तः इत्यत आह ।

**आप्तस्तु यथार्थवक्ता**

यथार्थं वदतीति यथार्थवक्ता। यथाभूताबाधितार्थोपदेष्टा।
ननु किं वाक्यमित्यतः आह।

**वाक्यं पदसमूहः**

शब्दप्रमाणलक्षणस्य वाक्यपदघटितत्वात् वाक्यपदार्थज्ञानं विना शब्दप्रमाणस्य लक्षणज्ञानं न संभवति। कुतः इति चेत् घटकज्ञानं विना घटितज्ञानासंभवात्।

पदानां समूहः पदसमूहः। षष्ठ्याः घटकत्वमर्थः। 'तेषां' आधेयता संबंधेन षष्ठ्यर्थ घटकत्वेऽन्वयः। समूह शब्दस्य घटित तावत्समुदायोऽर्थः। पदनिष्ठघटकतायाः निरूपितत्वसंबंधेन घटितताव त्समुदायैकदेशघटितत्तायामन्वयः। तथाच पदनिष्ठ घटकतानिरूपित घटिततावत्समुदायः। तस्य अभेदसंबंधेन वाक्येऽन्वयः। तया च पदनिष्ठ घटकतानिरूपित घटिततावत्समुदायाभिन्नं वाक्यम्। पदसमु दायत्वं वाक्य लक्षणम्। गामानय इत्यादि वाक्ये इदं लक्षणं वर्तते। गौः पदम्। तन्निष्ठ घटकतानिरूपित घटिततावत्समुदायत्वं "गामानय" इत्यादि पदसमूहे वर्तते इति लक्षणसमन्वयः।

अस्य लक्षणस्य पदघटितत्वात् पदज्ञानं विना वाक्यज्ञाना संभवात् पदलक्षणमाह।

**शक्तं पदम्।**

शक्तिमदभिन्नं पदम् इत्यर्थः। शक्तं ज्ञानजननसमर्थमित्यर्थः।
शक्तिलक्षणं निरूपयति।

**अस्मात् पदादयमर्थो बोद्धव्य इति ईश्वरेच्छा संकेतः शक्तिः।**

अस्मादित्यत्र पंचम्याः जन्यत्वमर्थः। अस्मात् इत्यत्र इदं पदस्य आधेयतासंबंधेन पंचम्यर्थ जन्यत्वेऽन्वयः। तस्य आश्रयता संबंधेन अर्थ शब्दार्थ बोधविषयेऽन्वयः। इदं पदनिष्ठजनकतानिरू पित जन्यत्वाश्रयः बोधविषयः। घटपदजन्यबोधविषयः घट एव भवतु इति ईश्वरसंकेतः शक्तिः।

आकांक्षादिकं लक्षयति ।

**आकांक्षा योग्यता सन्निधिश्च वाक्यार्थज्ञानहेतुः ।**

वाक्यस्यार्थो वाक्यार्थः । षष्ठ्याः प्रतिपाद्यत्वमर्थः । वाक्यार्थस्य ज्ञानं वाक्यार्थज्ञानम् । षष्ठ्याः विषयत्वमर्थः । तथाच वाक्यप्रतिपाद्यार्थ विषयकबोधकारणं इति फलितार्थः ।

# आकांक्षानिरूपणम्

**पदस्य पदान्तर व्यतिरेक प्रयुक्तान्वयाननुभावकत्वं आकांक्षा । यथा गौरश्वः पुरुषो हस्तीति वाक्यं न प्रमाणं आकांक्षादिविरहात् ।**

यत्पदस्य यत्पदव्यतिरेकप्रयुक्तं यादृश अन्वयाननुभावकत्वं शाब्दबोधाभावः तादृश शाब्दबोधे तत्पदवत्वं आकांक्षा ।

यथा घटमानयेत्यादि वाक्य घटकीभूत घटपदस्य अम्पद व्यतिरेक प्रयुक्तं शाब्दबोधो न जायते । घट आनय इत्यत्र शाब्द बोधो न जायते । अतः घटपदस्य अम्पदेन सहाकाँक्षा । घटम् इत्यत्र अम्पदविशेष्यक घटप्रकारक ज्ञाने शाब्दबोधो जायते । अम् घटः इति विपरीतोच्चारणे तादृश ज्ञानाभावात् तादृशशाब्दबोधो न जायते ।

# योग्यतानिरूपणम्

**अर्थाबाधो योग्यता । अग्निना सिञ्चतीति वाक्यं न प्रमाणं । योग्यताविरहात् ।**

अर्थयोरबाधः अर्थाबाधः । अर्थयोः परस्परसम्बन्धः । अग्निना सिञ्चतीति सेककरणत्वस्य जलधर्मस्य वन्हौ बाधनिश्चयसत्वान्न तादृशवाक्यात् शाब्दबोधो जायते ।

# सन्निधिनिरूपणं

**त. स. मूल**–पदानामविलंबेनोच्चारणं सन्निधिः। प्रहरे प्रहरे ऽसहोच्चरितानि गामानयेत्यादि पदानि न प्रमाणम् सान्निध्याभावात्।

प्रथमप्रहरे "गां" इत्युक्त्वा द्वितीयप्रहरे "आनय" इति असहोच्चरितानि विलंबोच्चरितानि पदानि न प्रमाणम्। सांनिध्याभावात्।

**त. स. मूल**– वाक्यं द्विविधम् वैदिकं लौकिकं चेति वैदिक–मीश्वरोक्तत्वात् सर्वमपि प्रमाणम्। लौकिकं त्वाप्तवाक्यं प्रमाणम्। अन्यदप्रमाणम्। वाक्यार्थज्ञानं शब्दज्ञानम्। तत्करणं शब्दः यथार्थानुभवो निरूपितः।

॥ इति शब्दपरिच्छेदः ॥

शाब्दबोधः पूर्ववत्

वैदिकत्वाभिन्न लौकिकत्वाभिन्न द्वित्वसंख्या पर्याप्त्यधिकरण विभाजक धर्मान्यतरनिष्ठ आधेयतानिरूपित अधिकरणतावदभिन्नं वाक्यम्।

॥ शब्दपरिच्छेदः समाप्तः ॥

# अयथार्थानुभवविभागनिरूपणम्

## अयथार्थानुभवस्त्रिविधः – संशयविपर्यतर्कभेदात्

अत्र शाब्दबोधप्रकारस्तु पूर्ववद्बोध्यम्। संशयविपर्ययतर्कनिष्ठ असाधारण धर्माभिन्नत्रित्वसंख्या पर्याप्त्यधिकरण विभाजक धर्मान्यतमवदभिन्नः अयथार्थानुभवः।

# अथ संशयनिरूपणं

**त. स. मूल**– एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्टयज्ञानं संशयः। यथा स्थाणुर्वापुरुषो वा इति।

अत्र शाब्दबोधप्रकारस्तु इत्थम्। एकस्मिन् धर्मिणि इत्यत्र धर्मिपदोत्तर सप्तम्याः विशेष्यत्वमर्थः। धर्मिणः आधेयता संबंधेन

विशेष्यतायामन्वयः । तथा च एकधर्मिनिष्ठविशेष्यता । तस्याः निरूपकत्वसंबंधेन ज्ञानेऽन्वयः ।

विरुद्धाश्च ते नानाधर्माश्च विरुद्धनानाधर्माः । कर्मधारयसमासेन समस्यमानयोः पदार्थयोः अभेद संबंधेन अन्वयः । तथा च विरुद्धा भिन्न नानाधर्माः ।

वैशिष्ट्यशब्दस्य प्रकारत्वमर्थः । नानाधर्माणां आधेयता संबंधेन प्रकारतायामन्वयः । विरुद्धाभिन्न नानाधर्मनिष्ठप्रकारता । तस्याः निरूपकत्व संबंधेन ज्ञानेऽन्वयः ।

ज्ञानस्याभेदसम्बन्धेन संशयेऽन्वयः । तथाच एकधर्मिनिष्ठ विशेष्यतानिरूपक, विरुद्धनानाधर्मनिष्ठ प्रकारतानिरूपक ज्ञानाभिन्नः संशयः । एकधर्मिनिष्ठविशेष्यतानिरूपकत्वे सति विरुद्धाभिन्ननाना धर्मनिष्ठ प्रकारतानिरूपकत्वे सति ज्ञानत्वं संशयस्य लक्षणम् ।

अयं स्थाणुर्वा पुरुषो वा इति संशये उक्तलक्षणं वर्तते । पुरोवर्तिनि इदंपदार्थे स्थाणुत्वपुरुषत्वरूप विरुद्धनानाधर्माः भासन्ते । अतः पुरोवर्तिधर्मी विशेष्यः । विशेष्यता धर्मिनिष्ठा । एकधर्मिनिष्ठा विशेष्यता किं निरूपिता ज्ञाननिरूपिता चेत् । ज्ञानं एकधर्मिनिष्ठविशे ष्यतानिरूपकं भवति ।

उक्त लक्षणे एकधर्मिविशेष्यकत्व, स्थाणुत्व पुरुषत्व निष्ठ प्रकारता निरूपकत्वंच वर्तते । ज्ञानत्वमपि वर्तते इति लक्षणसमन्वयः ।

दलकृत्यम् १) विरुद्धनानाधर्मनिष्ठ प्रकारतानिरूपकत्वे सति ज्ञानत्वं संशयस्य लक्षणमित्येवोक्तौ "पर्वतो वन्हिमान्" "ह्रदः वन्ह्यभाववान्" इति समूहालंबनात्मक ज्ञाने अतिव्याप्तिः । वन्हि वन्ह्यभावयोः विरुद्धनानाधर्मत्वेन उक्तसमूहालंबनात्मकज्ञानस्य वन्हि-वन्ह्यभावरूप विरुद्धनानाधर्मप्रकारत्वं वर्तते इति अतिव्याप्तिः ।

अतः एकधर्मिनिष्टविशेष्यतानिरूपकत्वं निवेशनीयम् । इदानीं नातिव्याप्तिः । यद्यपि वन्हि वन्ह्यभावौ विरुद्धनाधर्मौ तथापि तौ

एकस्मिन् धर्मिणि न भासेते किंतु पर्वते वन्हिः हृदे वन्ह्यभावश्च भासते । अतः उक्तसमूहालम्बनात्मक ज्ञानस्य एकधर्मिनिष्ठ विशेष्यता निरूपकत्वाभावान्नातिव्याप्तिः ।

२) एकधर्मिनिष्ठविशेष्यतानिरूपकत्वे सति नानाधर्मप्रकारक ज्ञानत्वं संशयस्य लक्षणम् इत्येवोक्तौ घटो द्रव्यं इति निश्चयात्मक ज्ञाने अतिव्याप्तिः । उक्तज्ञाने घटरूपधर्मिणि घटत्वद्रव्यत्वयोः नाना धर्मयोः भासमानत्वेन एकधर्मिनिष्ठविशेष्यतानिरूपकत्वं नानाधर्मप्रका रकत्वं च ज्ञाने वर्तते इति अतिव्याप्तिः । अतः विरुद्धत्वं धर्मे निवे शनीयम् । इदानीं नातिव्याप्तिः । तत्कथमिति चेत् घटत्वद्रव्यत्वयोः नानात्वेऽपि विरुद्धत्वाभावात् विरुद्धनानाधर्मपदेन घटत्वद्रव्यत्वयोः ग्रहणासंभवात् नातिव्याप्तिः ।

नानात्वानुपादाने घटत्वविरुद्ध पटत्ववान् इत्याकारक ज्ञाने अतिव्याप्तिः । कुतः इति चेत् घटत्वविरोधविशिष्टपटत्वस्य सत्वात् विरुद्धधर्मप्रकारकत्वं एकधर्मिविशेष्यक ज्ञानत्वं च वर्तते इति अति व्याप्तिः । अतः धर्मे नानात्वं निवेशनीयम् । तत्र ज्ञाने पटे घटत्व विरुद्ध पटत्वमात्रं भासते । न तु धर्मान्तरम् । अतः उक्तज्ञानस्य नानाधर्मप्रकारकत्वाभावान्नातिव्याप्तिः । तथा च एकधर्मिनिष्ठ विशे-ष्यतानिरूपकत्वे सति विरुद्धाभिन्ननानाधर्मनिष्ठप्रकारकत्वे सति ज्ञानत्वं संशयलक्षणमिति फलितम् ।

# विपर्ययनिरूपणं

**मिथ्याज्ञानं विपर्ययः । यथा शुक्ताविदं रजतमिति ।**

विपर्ययो नाम भ्रमः । तदभाववति तत्प्रकारकज्ञानम् । शाब्द बोधप्रकारस्तु पूर्ववद् बोध्यम् । तद्धर्मनिष्ठप्रतियोगितानिरूपक अभाव निष्ठ आधेयतानिरूपित अधिकरणतावन्निष्ठ विशेष्यतानिरूपक तद्धर्म निष्ठप्रकारतानिरूपक ज्ञानं विपर्ययाभिन्नः ।

तद्धर्माभाववन्निष्ठ विशेष्यकत्वे सति तद्धर्मप्रकारकत्वे सति ज्ञानत्वं विपर्ययस्य लक्षणम् ।

शुक्ति दृष्ट्वा इदं रजतमिति भ्रमे लक्षणसमन्वयः । अत्र तद्धर्मः रजतत्वम् । तन्निष्ठ प्रतियोगिततानिरूपक अभाववत् शुक्तिः । तन्निष्ठ विशेष्यतानिरूपकत्वं रजतत्वनिष्ठ प्रकारतानिरूपकत्वं च उक्त भ्रमे सत्वात् लक्षणसमन्वयः ।

# अथ तर्कनिरूपणम्

**व्याप्यारोपेण व्यापकारोपकस्तर्कः । यथा यदि वन्हिर्न स्यात् तर्हि धूमोऽपि न स्यात् ।**

व्याप्यारोपेण इत्यत्र तृतीयायाः जन्यत्वं अर्थः । आरोपः आहार्यज्ञानम् ।

व्याप्यविषयक आहार्यज्ञाननिष्ठ जनकतानिरूपित जन्यत्वाश्रय व्यापक विषयक आहार्यज्ञानाभिन्नस्तर्कः ।

# स्मृतिविभागनिरूपणं

**त. स. मूल–** "स्मृतिरपि द्विविधा । यथार्थाऽयथार्था चेति । प्रमाजन्या यथार्था । अप्रमाजन्या अयथार्था ।"

अत्र शाब्दबोधकारस्तु पूर्ववत् । यथार्थत्वाभिन्न अयथार्थत्वा भिन्न द्वित्वसंख्यापर्याप्त्यधिकरण विभाजक धर्मान्यतरवदभिन्ना स्मृतिः ।

प्रमया जन्या प्रमाजन्या इति विग्रहः । प्रमा पदस्य प्रमा संस्कार इत्यर्थः । तृतीयायाः जनकत्वमर्थः । प्रमासंस्कारस्य आधेयता संबंधेन तृतीयार्थ जनकत्वेऽन्वयः । तस्य निरूपितत्व सम्बन्धेन जन्यतायामन्वयः । तथा च प्रमासंस्कारनिष्ठ जनकतानिरूपित जन्यता तस्याः अभेदसम्बन्धेन यथार्थस्मृतौ अन्वयः । तथा च प्रमासंस्कार निष्ठ जनकतानिरूपित जन्यतावदभिन्ना यथार्थस्मृतिः । एवं अप्रमा संस्कारनिष्ठ जनकतानिरूपित जन्यतावदभिन्ना अयथार्थस्मृतिः ।

# अथ सुखनिरूपणम्

अथ बुद्धिं निरूप्य सुखादीन् निरूपयति ।

**सर्वेषामनुकूलतया वेदनीयं सुखम् ।**

सर्वपुरुष समवेत इच्छाविषयत्वं सुखस्य लक्षणम् । सर्वपुरुषाणां सुखेच्छा वर्तते । अतः सर्वपुरुष समवेत इच्छाविषयत्वं सुखे वर्तते इति लक्षणसमन्वयः ।

एवं सति द्रव्यादि इच्छायां अतिव्याप्तिः । तत्र सर्वपुरुष समवेत इच्छाविषयत्वस्य सत्वात् अतिव्याप्तिरिति चेत् अनन्याधीनत्वं विशेषणीयम् । तथा च सर्वपुरुष समवेत अनन्येच्छाधीनविषयत्वं सुखस्य लक्षणमिति फलितम् । इदानीं नातिव्याप्तिः । तत्कथमिति चेत् द्रव्यादि इच्छायाः सुखेच्छाधीनत्वेन इतरेच्छानधीनत्वं तत्र नास्ति । अतः सर्वपुरुष समवेत अनन्याधीन इच्छाविषयत्वं सुखमात्रे वर्तते इति नातिव्याप्तिः ।

# दुःखनिरूपणं

**प्रतिकूलतया वेदनीयं दुःखम् ।**

अत्रापि सर्वेषामित्यनुषज्यते । सर्वपुरुष समवेतद्वेषविषयत्वं दुःखस्य लक्षणम् । सर्वपुरुषाणां दुःखद्वेषो वर्तते । अतः सर्वपुरुष समवेत द्वेषविषयत्वं दुःखे वर्तते इति लक्षणसमन्वयः ।

एवं सति द्वेषविषयत्वमात्रोक्तौ सर्पादौ अतिव्याप्तिः । तत्र सर्वपुरुषसमवेत द्वेषविषयत्वस्य सत्वात् अतिव्याप्तिरिति चेत् द्वेषे अनन्याधीनत्वं विशेषणीयम् । तथा च सर्वपुरुषसमवेत इतरद्वेषानधीन द्वेषविषयत्वं दुःखस्य लक्षणं इति फलितम् । तत्कथमिति चेत् सर्पादि द्वेषस्य दुःखद्वेषाधीनत्वेन इतरद्वेषानधीनत्वं तत्र नास्ति इति नातिव्याप्तिः । तथा च सर्वपुरुष समवेत अनन्याधीन द्वेषविषयत्वं दुःखमात्रे सत्वात् नातिव्याप्तिः ।

# इच्छाद्वेषप्रयत्ननिरूपणं

**इच्छा कामः । क्रोधो द्वेषः । कृतिः प्रयत्नः ।**

इच्छायाः कामत्वं, द्वेषस्य क्रोधत्वं, प्रयत्नस्य कृतित्वं लक्षणमिति बोध्यम् ।

# धर्माधर्मनिरूपणं

**विहितकर्मजन्यो धर्मः । निषिद्धकर्मजन्योऽधर्मः ।**

वेदविहितकर्मनिष्ठजनकतानिरूपित जन्यतावदभिन्नो धर्मः । वेद निषिद्धकर्मनिष्ठ जनकतानिरूपित जन्यतावदभिन्नोऽधर्मः । विहितानि यानि कर्माणि यागादीनि तज्जन्यो धर्म इत्यर्थः । वेदनिषिद्धानि यानि कर्माणि कलञ्जभक्षणागम्य गमनमुरापानादीनि तज्जन्यः अधर्मः इत्यर्थः ।

**बुद्ध्यादयोऽष्टावात्ममात्रगुणाः ।**

बुद्धिः आदी एषां ते बुद्ध्यादयः । आत्ममात्रस्य गुणाः आत्म मात्रगुणाः । षष्ठ्याः समवेतत्वमर्थः । शाब्दबोधस्तु पूर्ववत् बोध्यम् ।

बुद्धिनिष्ठघटकतानिरूपित घटितत्तावदभिन्नः समुदायः अष्टत्व संख्याविशिष्टाभिन्नः आत्मनिष्ठ अधिकरणतानिरूपित समवायसम्बन्धाव च्छिन्न आधेयत्वाश्रयः ।

# अथ संस्कारविभागनिरूपणं

**संस्कारस्त्रिविधः । वेगो भावना स्थितस्थापकश्चेति ।**

वेगत्वाभिन्न भावनात्वाभिन्न स्थितस्थापकत्वाभिन्न त्रित्वसंख्या पर्याप्त्यधिकरण विभाजकधर्मान्यतमवदभिन्नः संस्कारः इति शाब्दबोधः ऊह्यः ।

# अथ वेगनिरूपणम्

**वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः ।**

पृथिवी आदी यस्य तत् पृथिव्यादि । पृथिव्यादि च तत् चतुष्टयं च पृथिव्यादि चतुष्टयम् । पृथिव्यादि चतुष्टयं च मनश्च । पृथिव्यादिचतुष्टयमनसी तयोः वृत्तिर्यस्य सः इति विग्रहः ।

शाब्दबोधप्रकारस्तु पूर्ववत् ।

पृथिवीनिष्ठ घटकतानिरूपित घटिततावदभिन्न समूदायनिरूपित चतुष्ट्त्वसंख्याविशिष्ठ मनोनिष्ठ अधिकरणतानिरूपित आधेयत्वाश्रयः वेगः ।

क्रियाजन्यत्वे सति क्रियाजनकत्वं वेगस्य लक्षणम् । विशेष्य मात्रोक्तौ गुरुत्वे अतिव्याप्तिः । क्रियाजनकत्वं गुरुत्वेऽपि वर्तमान त्वात् । अतः विशेषणदलं देयम् । गुरुत्वे क्रियाजन्यत्वाभावात् नातिव्याप्तिः । तावन्मात्रोक्तौ (विशेषणमात्रोक्तौ) विभागादौ अति व्याप्तिः । तत्रापि क्रियाजन्यत्वंसत्वात् । अतः विशेष्यदलं निवेश नीयम् । विभागादौ क्रियाजनकत्वभावान्नातिव्याप्तिः ।

अथ भावनां निरूपयति ।

**अनुभवजन्या स्मृतिहेतुर्भावना ।**

शाब्दबोधस्तु पूर्ववत् ।

अनुभवनिष्ठ जनकतानिरूपित जन्यतावदभिन्ना स्मृतिनिष्ठकार्यता निरूपित कारणतावदभिन्ना भावना । अनुभवजन्यत्वे सति स्मृति हेतुत्वं भावनायाः लक्षणम् ।

विशेषणमात्रोक्तौ अनुभवध्वंसेऽतिव्याप्तिः । कुतः इति चेत् ध्वंसं प्रति प्रतियोगिनः कारणत्वात् अनुभवध्वंसं प्रति अनुभवस्य जनकत्वात् (कारणत्वात्) । जनकता अनुभवनिष्ठा जन्यता अनुभवध्वंस निष्ठा । तयोर्निरूपितत्वं संबंधः । ध्वंसे अनुभवजन्यत्वं वर्तते इति अतिव्याप्तिः । अतः विशेष्यदलं देयम् । अनुभवध्वंसे स्मृतिहेतुत्वा भावान्नातिव्याप्तिः ।

तावन्मात्रोक्तौ आत्मन्यतिव्याप्तिः । स्मृतिं प्रति आत्मनः कारणत्वात् । स्मृतिनिरूपित कारणत्वं आत्मनि वर्तते इति अति

व्याप्तिः । अतः अनुभवजन्यत्वं निवेशनीयम् । इदानीं नातिव्याप्तिः कुतः इति चेत् आत्मनः नित्यत्वात् तत्र अनुभवजन्यत्वाभावात् नातिव्याप्तिः ।

**आत्ममात्रवृत्तिः ।**

आत्मा एव आत्ममात्र तस्मिन् वृत्तिर्यस्याः सा । अन्योयोगो व्यवच्छेदः एवकारार्थः । शाब्दबोधस्तु पूर्ववत् ध्येयः । आत्मनिष्ठ प्रतियोगितानिरूपक भेदवन्निष्ठ प्रतियोगितानिरूपक संबंधनिष्ठ प्रति योगितानिरूपक अभावाश्रया, आत्मनिष्ठ अधिकरणतानिरूपित आधे यत्वाश्रया भावना ।

स्थितस्थापकं लक्षयति ।

**त. स. मूल –** "अन्यथाकृतस्य (स्थितस्य) पुनस्तादवस्थ्यापादकः स्थितस्थापकः । कटादिः पृथिवीमात्रवृत्तिः ।

अन्यथाकृतस्य प्रकारांतरेण पूर्वावस्थाभिन्नावस्थास्थितस्य पुनः तादवस्थ्यापादकः पुनः पूर्वावस्थासंपकत्वं स्थितस्थापकत्वं इत्यर्थः ।

# अथ कर्मनिरूपणम्

गुणान्निरूप्य कर्मणां लक्षणं निरूपयति ।

**चलनात्मकं कर्म ।**

तदर्थस्तु संयोगविभागानुकूलमित्यर्थः । क्रियायाः विभागः ततः पूर्वदेशसंयोगनाशः, ततः उत्तदेशसंयोगोत्पत्तिः इति क्रमः ।

**१) ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणं ।**

ऊर्ध्वदेशसंयोगनिष्ठकार्यतानिरूपितकारणत्वं उत्क्षेपणस्य लक्षणं ।

**२) अधोदेशसंयोगहेतुरपक्षेपणं ।**

अधोदेशसंयोगनिष्ठ कार्यतानिरूपित कारणतावत्वं अपक्षेपणस्य लक्षणम् ।

**३) शरीरसन्निकृष्टसंयोगहेतुराकुंचनं ।**

शरीरसन्निकृष्टसंयोगनिष्ठ कार्यतानिरूपित कारणतावत्वं आकुञ्चनस्य लक्षणम् ।

**विप्रकृष्टसंयोगहेतुः प्रसारणं ।**

शरीरविप्रकृष्ट संयोगनिष्ठ कार्यतानिरूपित कारणतावत्वं प्रसारणस्य लक्षणम् ।

**अन्यत्सर्वं गमनं ।**

भ्रमणरेचनस्पन्दनौर्ध्वज्वलनतिर्यग्गमनात्मकं सर्वं गमनस्वरूपं इत्यर्थः ।

उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणाभ्यां अन्यत् । पञ्चम्याः प्रतियोगित्वमर्थः । उत्क्षेपणापक्षेपणाकुञ्चन प्रसारणानां आधेयतासंबंधेन प्रतियोगिताचां अन्वयः । अन्यच्छब्दस्य भिन्नमर्थः । प्रतियोगितायाः निरूपकत्वसंबंधेन भेदवदित्येकदेश भेदेऽन्वयः । तस्याभेदसंबंधेन गमनेऽन्वयः । सर्वस्यापि अभेदसंबंधेन गमनेऽन्वयः ।

तथा च उत्क्षेपणापक्षेपणाकुञ्चन प्रसारणनिष्ठ प्रतियोगिता निरूपक भेदवदभिन्नं सर्वाभिन्नं गमनम् । इति शाब्दबोधप्रकारः ।

# सामान्यनिरूपणं

सामान्यं लक्षयति ।

**त स मूल**–" नित्यमेकमनेकानुगतं सामान्यम् । परं सत्ता । अपरं द्रव्यत्वादि । "

नित्यत्वे सति एकत्वे सनि अनेकानुगतत्वं सामान्यस्य लक्षणं ।

घटत्वजातौ इदं लक्षणं वर्तते । तत्कथमिति चेत्; घटत्व जातिर्नित्या कदापि सा जातिर्न नश्यति अतः नित्यत्वमायातम् ।

सा जातिः एका एव । अतः एकत्वमायातम् । घटत्वरूपा सा जातिः अनेकघटेषु समवाय संबंधेन वर्तते । अतः अनेकसमवेतत्वं वर्तते इति लक्षणसमन्वयः ।

दलकृत्यं :—अनेकसमवेतत्वं सामान्यस्य लक्षणमित्येवोक्तौ संयोगादावतिव्याप्तिः। अतः नित्यत्वं निवेशनीयम्। संयोगस्य नित्यत्वाभावान्नातिव्याप्तिः।

नित्यत्वमात्रोक्तौ आकाशादावतिव्याप्तिः। अतः अनेकसमवेतत्वं निवेशनीयम्। आकाशस्य अनेकसमवेतत्वाभावान्नातिव्याप्तिः।

विशेषाणां स्वरूपमाह।

# विशेषनिरूपणम्

**नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः।**

नित्यद्रव्येषु वृत्तिर्येषां ते। नित्यद्रव्यवृत्तयः। इति विग्रहः। व्यावर्तकाः भेदानुमितिजनकाः। नित्यद्रव्यनिष्ठ अधिकरणतानिरूपित आधेयतावदभिन्ना भेदानुमितिजनकाः विशेषाः।

तथा हि। अयं पृथिवीपरमाणुरितरपरमाणुभ्यो भिद्यते एतद् विशेषात्। इत्यनुमाने हेतुत्वं बोध्यम्। सामान्यभिन्नत्वे सति सामान्यशून्यत्वे सति समवेतत्वं विशेषलक्षणम्।

# समवायनिरूपणम्

समवायं लक्षयति।

**नित्यसम्बन्धः समवायः।**

नित्यत्वे सति सम्बन्धत्वं समवायस्य लक्षणम्। नित्यत्वमात्रोक्तौ गगनादावतिव्याप्तिः। तद्वारणाय सबंधत्वं निवेशनीयम्। संबंधत्वमात्रोक्तौ संयोगादावतिव्याप्तिः। अतस्तद्वारणाय नित्यत्वं निवेशनीयम्। तत्र संबंधाभावान्नातिव्याप्तिः।

**त. स मूल—** अयुतसिद्धवृत्तिः। ययोर्मध्ये एकमविनश्यदवस्थमपराश्रितमेव अवतिष्ठते तौ अयुतसिद्धौ।

अयुतसिद्धयोर्वृत्तिर्यस्य सः इति विग्रहः। सप्तम्यर्थो निरूपितत्वम्। तथा च अयुतसिद्धनिरूपितवृत्तित्वाश्रयः समवायः।

इति शाब्दबोधप्रकारः।

तदर्थस्तु ययोर्मध्ये तंतुपटयोर्मध्ये एकं अवयव्यादिकं पटः। अविनश्यदवस्थं विनाशपर्यंतं अपराश्रितमेव तंत्वाश्रितमेव अवतिष्ठति तौ अयुतसिद्धौ अवयवादिकं तंत्वादिकं विहाय अवयवी पटः नैव वर्तते अतः तौ अयुतसिद्धौ।

भूतले घटो वर्तते इत्यत्र भूतलं विहाय घटो वर्तते अतस्तौ नायुतसिद्धौ।

**त स मूल**— "यथा अवयवावयविनौ; गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती; विशेषनित्यद्रव्ये चेति।"

# अभावविभागनिरूपणं

तत्राद्यं प्रागभावं लक्षयति।

**अनादिः सान्तः प्रागभावः उत्पत्तेः पूर्वं कार्यस्य।**

आदिरुत्पत्तिः। उत्पत्तिरहितम्। अन्तो ध्वंसः तत्प्रतियोगित्वं सान्तत्वम्।

तथा च उत्पत्तिशून्यत्वे सति ध्वंसप्रतियोगित्वं प्रागभावस्य लक्षणम्।

घटप्रागभावे इदं लक्षणं वर्तते तत्कथमिति चेत् घटप्रागभावस्य उत्पत्तिर्नास्ति।

घटोत्पत्यनंतरं घटप्रागभावो नश्यति। अतः ध्वंसप्रतियोगित्वं घटे वर्तते इति लक्षणसमन्वयः।

दलकृत्यं :—उत्पत्तिशून्यत्वं प्रागभावस्य लक्षणं इत्येवोक्तौ आकाशे अतिव्याप्तिः। आकाशस्य नित्यत्वेन उत्पत्ति शून्यत्वं आकाशे सत्वात् अतिव्याप्तिः। अतः विशेष्यदलं देयम्। आकाशस्य नित्यत्वेन तन्नाशो नास्ति। अतः ध्वंसप्रतियोगित्वं तत्र नास्तीति नातिव्याप्तिः।

तावन्मात्रोक्तौ घटादावतिव्याप्तिः। कुतः इति चेत् घटनाशो वर्तते। घटध्वंसप्रतियोगित्वं घटे सत्वादतिव्याप्तिः। अतः विशेषण

दलं देयम् । घटस्य उत्पत्स्यमानत्वेन उत्पत्तिशून्यत्वं तत्र नास्तीति नातिव्याप्तिः ।

द्वितीयं प्रध्वंसाभावं निरूपयति ।

त. स. मूल—सादिरनंतः प्रध्वंसाभावः । उत्पत्तेरनंतरं कार्यस्य ।

(प्रागभावप्रतियोगित्वे) उत्पत्तिमत्वे सति ध्वंसाप्रतियोगित्वं प्रध्वंसाभावस्य लक्षणम् ।

घटध्वंसे उक्तलक्षणं वर्तते । तत्किमिति चेत् घटध्वंसात्पूर्वं घटप्रागभावो वर्तते । अतः घटध्वंसप्रागभावं प्रति घटध्वंसस्य प्रति योगित्वेन प्रागभावप्रतियोगित्वमायातम् । घटध्वंसस्य ध्वंसो नास्ति अतः ध्वंसाप्रतियोगित्वं घटध्वंसे आयातमिति लक्षणसमन्वयः ।

दलकृत्यं :—ध्वंसप्रतियोगित्वं प्रध्वंसाभावस्य लक्षणं इत्येवोक्तौ आकाशे अतिव्याप्तिः । अतः प्रगभावप्रतियोगित्वं निवेशनीयम् । इदानी नातिव्याप्तिः । तावन्मात्रोक्तौ घटे अतिव्याप्तिः । अतः ध्वंसाप्रतियोगित्वं निवेशनीयम् । घटध्वंसं प्रति घटस्य प्रतियोगित्वात् अप्रतियोगित्वं न स्तीति नातिव्याप्तिः ।

तृतीयं अत्यंताभावं लक्षयति ।

**त्रैकालिकः संसर्गाभावोऽत्यंताभावः । यथा भूतले घटो नास्तीति ।**

भूतभविष्यद्वर्तमानरूप कालत्रयवृत्तित्वे सति संसर्गाभावत्वं अत्यंता भावस्य लक्षणम् । भूतले घटो नास्तीति प्रतीतिविषयक घटात्यन्ता भावे लक्षणसमन्वयः । तत्कथमिति चेत् स च घटाभावः कालत्रय वृत्तिः । अतः कालत्रयवृत्तित्वं आयातम् । संसर्गाभावत्वमपि अत्यन्ताभावे सत्वाल्लक्षणसंगतिः ।

संसर्गाभावत्वं इत्येवोक्तौ प्रागभावे अतिव्याप्तिः । अतः त्रैका लिकत्वं निवेशनीयम् ।

तावन्मात्रोक्तौ आकाशादावतिव्याप्तिः । अतः संसर्गाभावत्वं निवेशनीयम् । आकाशादौ संसर्गाभावत्वाभावत्वात् नातिव्याप्तिः ।

तुरीयं अन्योन्याभावं लक्षयति ।

**तादात्म्यावच्छिन्नप्रतियोगिताकाभावो अन्योन्याभावः यथा घटः पटो न भवति इति ।**

तादात्म्यावच्छेदक संबधावच्छिन्न प्रतियोगिताको योऽभावः सोऽन्योन्याभावः । घटे पटतादात्म्यं नास्ति । किंतु घटतादात्म्येन पटो न भवति अतः तादात्म्यसंबंधावच्छिन्न पटनिष्ठ प्रतियोगितानिरूपकाभाव एव वर्तते । स एव अन्योन्याभावः ।

**सर्वेषामपि पदार्थानां उक्तेष्वेवांतर्भावात् सप्तैव पदार्थाः इति सिद्धम् ।**

प्रमाणप्रमेये सूत्रे षोडशपदार्थोक्तेरपि सर्वेषां सप्तपदार्थेषु एव अन्तर्भावात् न सप्तत्वहानिरिति सिद्धम् ।

श्री वडवीत्युपाह्व माधवाचार्यैः विरचितः
तर्कसंग्रहार्थविवरणरूपग्रन्थः सम्पूर्णः ।



# शुद्धाशुद्धपत्रिका

| पृष्टम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २ | २८ | इत्येलदेशः | इत्येकदेश |
| ४ | ५ | विशेष्या | विशेष्य |
| | ६ | शब्दर्थ | शब्दार्थं |
| | २२ | इत्यर्दः । | इत्यर्थः । |
| | २६ | द्रव्यभावबाष | द्रव्यत्वाद्य |
| ५ | ३ | अभेघ | अभेद |
| | ७ | पर्याप्त्यप्रि | पर्याप्त्यधि |
| | ९ | पृथिव्यादि | पृथिवीत्वादि |
| | ९ | अभेध | अभेद |
| | १० | धर्मान्यतममस्मिन्नन्वयः | धर्मान्यतमस्मिन्नन्वयः |
| | १२ | अभेघ | अभेद |
| | १८ | द्रव्यत्व | द्रवत्व |
| | | प्रयत्न | प्रयत्न |
| | १९ | गुणाः ।। | गुंणाः ।। |
| | २३ | स्पर्शपरिमाण | स्पर्शसंख्यापरिमाण |
| ६ | १ | चतुर्विशतित्वं | चतुर्विंशतित्व |
| | २ | अभद | अभेद |
| | ४ | विशिष्टभिवाः | विशिष्टाभिन्नाः |
| | २३ | पञ्पदस्य | पञ्चपदस्य |
| | २५ | गमनन्वांता | गमनत्वांता |
| ७ | ८ | आधेयत्व | आधेयत्वस |
| | ९ | धर्मों | धर्मी |
| | १० | धर्मयोरन्ययः । | धर्मयोरन्वयः |
| | ११ | धर्मो | धर्मौ |
| | १२ | शाब्दबोदः । | शाब्दबोधः । |
| ८ | ४ | अधिकरणता | अधिकरणताया |
| | ५ | संसंधेन | संबंधेन |
| | ९ | आधेयत्वऽन्वयः | आधेयत्वेऽन्वयः |
| | ११ | आधेयत्व | आधेयत्वम् |

| पृष्टम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ८ | १३ | नित्यप्रव्यनिष्ठ | नित्यद्रव्यनिष्ठ |
| | २४ | संसंघेन | संबंधेन |
| | | विशेघेष् | विशेषेषु |
| | | असन्त्वत्वं | अनंतत्वं |
| | | संख्यात | संख्यात्व |
| | २७ | घर्मा.शून्या: | घर्मशून्याः । |
| ९ | ५ | न्यमाव | न्याभाव |
| | ७ | पर्याप्याघि | पर्याप्त्यधि |
| | ९ | पर्याप्यघि | पर्याप्त्यघि |
| | २२ | यनिरूपित | यन्निरूपित |
| | २२ | आश्रयाता | आश्रयता |
| | २५ | घमान्यातम | घर्मान्यतम |
| | २० | घर्यान्यितस्मि | घमान्यतमस्मि |
| | | न्नत्वयः । | न्नन्वयः । |
| १० | २० | आश्रायता | आश्रयता |
| | १२ | अघिकरता | अधिकरणता |
| | २४ | अक्रियकं | अक्रियाकं |
| | २६ | व मः । | वदामः । |
| ११ | ६ | संबंघावद्दि | सबंघावच्छि |
| | | छन्नत्वम | न्नत्वम् |
| | १३ | समवासंबंधा | समवायसंबंधा |
| | १८ | गुणत्वाच्छिन्न | गुणत्वावच्छिन्न |
| १२ | २० | अधिकरता | अधिकरणता |
| | १७ | सत्त्वात्त् | सत्वात् |
| | २७ | द्रव्यत्वभाव | द्रव्यत्वाभाव |
| १३ | २६ | लक्षसमन्वयः | लक्षणसमन्वयः |
| १४ | ५ | विभाजकघर्मो | विभाजकघर्मौ |
| | २२ | अनित्य अनित्य | अनित्य |

| पृष्टम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | | पृथिवीत्वमर्थ: | पृथिवीत्वमर्थ: । |
| | २५ | पृथिवीत्वत्वाभिन्न | पृथिवीत्वाभिन्न |
| १६ | ६ | जनकतावदित्वर्थ: | जनकतावदित्यर्थ: |
| | ७ | जतकतायामन्वय: । | जनकतायामन्वय: । |
| | ९ | जनकतावपभिन्नं | जनकतावदभिन्नं |
| | १९ | आदांयस्यस: | तौ आदी यस्यस: |
| | २२ | घटकत्वादित्येकदेश | धटकतावदित्येकदेश |
| १८ | १५ | अधिकरणत्वात | अधिकरणतावत् |
| १९ | १५ | पृथियां | पृथिव्यां |
| | १८ | वादृश | तादृश |
| | १९ | अन: | अत: |
| | २२ | जातिव्याप्ति: | नातिव्याप्ति: |
| | २३ | सामनाधिक | सामनाधिक |
| | | रन्येऽपि | रण्येऽपि |
| | २६ | नाम नाम | नाम |
| २० | ६ | द्रव्यन्गम | द्रव्यत्वम |
| | २० | द्रव्तत्वाधिकरणं | द्रव्यत्वाधिकरणं |
| | २७ | संबंधेत | संबंधेन |
| | २० | सगवाय | समवाय |
| | | शीतस्पर्ज्ञनिष्ठ | शीतस्पर्शनिष्ठ |
| | | जातिमन्वं | जातिमत्वं |
| २२ | २९ | शरीरेंद्रियनिरूपित | शरीरेंद्रियविषयनिरूपित |
| २२ | १७ | विषयनानिरूपक | विषयताविरूपक |
| | २७ | रसमेंद्रिये | रसनेंद्रिये |
| २३ | २ | लक्षणमित्युक्ने | लक्षणमित्युक्ते |
| | ४ | अतिव्याप्ति: । | नातिव्याप्ति: । |
| | २४ | धटकताबंतौ | धटकतावंतौ |
| | २४ | तयोरभेदसंबंमेन | तयोरभेदसंबंधेन |

| पृष्टम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | २४ | यकिंचित्वस्तु | यत्किचिद्वस्तु |
| २४ | २० | नेजस्त्वम् | तेजस्त्वम् |
| | १२ | आद्यक्षणवच्छि | आद्यक्षणवछिन्न |
| | २२ | जातिमत्बं | जातिमत्वं |
| | २३ | सक्षणम् | लक्षणम् |
| | २३ | उष्णस्पर्शाधिकर बृत्तित्वं | उष्णस्पर्शाधिकरण वृत्तित्वं |
| | २५ | इदानों | इदानीं |
| २५ | २ | तथा ज | तथा च |
| | ९ | उष्णस्दर्शनिष्ठायां | उष्णस्पर्शनिष्ठायाँ |
| २५ | १० | सबंवाच्छिन्न | संबंधावच्छिन्न |
| | १४ | अशिकरणतावती | अधिकरणतावती |
| | १५ | पृथिवी | पृथिवी |
| | १८ | उष्णस्पर्शस्च | उष्णस्पर्शस्य |
| | १८ | उष्जस्पर्शस्च | उष्णस्पर्शस्य |
| | २९ | आधेय: | आधेयता |
| | २१ | पृमिव्यां | पृथिव्यां |
| | २३ | आधयता | आधेयता |
| | २७ | संबंवधावच्छिन्न | संबंधावच्छिन्न |
| २६ | २ | अधिकरणताक्ती | अधिकरणतावती |
| | ९ | समानाधिकरण्येऽपि | सामानाधिकरण्येऽपि |
| | २० | प्रतियोगिता वच्छेदिकं | प्रतियोगिता वच्छेदकं |
| | २८ | अधिकरणतार्गच्छिन्न | अधि रणतावाछि |
| २७ | ३ | ता जाति: | या जाति: |
| | ४ | तदित | तदिति |
| | २३ | विग्रहवाव्यात | विग्रहवाक्यात् |
| | २४ | पर्याप्यत्रिकरण | पर्याप्त्यधिकरण |

| पृष्टम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २८ | २४ | शब्दश्य | शब्दस्य |
| | १६ | धर्मान्यततमेष्व | धर्मान्यतमेष्व |
| | | न्वयः | न्वयः । |
| | २६ | विभाजकधर्माभि | विभाजकधर्माभिन्न |
| २९ | | कृष्णताराग्रवर्ती | कृष्णताराग्रवर्ति |
| | ११ | वर्तंते | वर्तते |
| | १८ | अधिकरणता | अधिकरणतानिरूपित |
| | २३ | चतुष्ट्व | चतुष्ट्त्व |
| ३० | १ | चतुष्ट्व | चतुष्ट्त्व |
| | ३ | विषयेऽंवव: | विषयेऽन्वयः । |
| | ४ | भबं | भ ं |
| | ५ | दिघ्यं | दिव्यं |
| | ५ | औदर्यच | औदर्यंच |
| | ६ | नेषां | तेषां |
| | ० | आषेयत्वे | आधेयत्वे |
| | १८ | घर्सेष्वन्वयः | धार्मेष्वन्वयः |
| | | चतुष्ट्व | चतुष्ट्त्व |
| ३१ | ३ | आदि | आदी |
| | ३० | समुदायंभिन्नः | समुदायाभिन्नः |
| | | परिणाहेतुरौदर्यम् | परिणामहेतुरौदर्यम् |
| ३२ | ३ | निरूपितत्व | निरूपकत्व |
| | ५ | कर्मतावन्ननिष्ट | कर्मतावदभिन्ननिष्ट |
| | १३ | सम्बंधि | संबंधाश्रय |
| | १८ | यस्प | यस्य |
| | १९ | आधेयताव | आधेयता |
| | | म्बन्धेन | सम्बन्धेन |
| | २३ | विग्रहवाक्य | विग्रहवाक्य |
| | | जम्यवोध | जन्यबोध |

| पृष्टम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३३ | २१ | अघिकरणताव | अघिकरणताव |
| | | दभिन्नः | दभिन्नः |
| | २५ | प्रतियोविता | प्रतियोगिता |
| | | निरूपक | निरूपक |
| ३४ | २ | स्वर्शनिष्ठ | स्पर्शनिष्ठ |
| | ४ | लक्षणवाक्यय | लक्षणवाक्यम |
| | ५ | वायोर्लक्षणम | वायोर्लक्षणम |
| | २० | अघेयतानिरूपित | आघेयतानिरूपित |
| ३५ | ४ | पीतघठे | पीतघटे |
| | १३ | प्रतिवोगिता | प्रतियोगिता |
| | १४ | बायोः | वायोः |
| | | फलितभ् । | फलितम् । |
| ३६ | ७ | ममवायसंबंघा | समवायसंबंघा |
| | | वच्छिन्न | वच्छिन्न |
| ३८ | ७ | आघेयतावदभिन्न | आघेयतावदभिन्नं |
| | १२ | आदिः | आधी |
| | | कार्यनानिरूपित | कार्यतानिरूपित |
| ३९ | २० | निणपित | निरूपित |
| ४१ | २५ | घटकतावदभिन्नः | घटकतावदभिन्न |
| ४१ | १७ | तन्निपिका | तन्निरूपिका |
| ४३ | २ | सथ | अथ |
| | ९ | ज्ञाननिष्ठ | आत्मनिष्ठा |
| | १२ | वतते | वर्तते |
| | १७ | संबंनेनाभावात् | संबंघेनाभावात् |
| | १८ | आघेयता | आघेयता |
| | २३ | पर्याप्त्यधिकरण | पर्याप्त्यधिकरण |
| | २७ | यच्छब्दस्य | तच्छब्दस्य |
| ४४ | १ | घटकन्वेऽन्वय | घटकत्वेऽन्वयः । |

| पृष्टम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | ४ | ज्ञाघोतो: | ज्ञाधातो: |
| | ९ | जीबात्मादि | जीवात्मादि |
| ४५ | ३ | षष्ठ्यर्थ | षष्टचर्थ |
| | १३ | साक्षात्कारो | साक्षात्कार |
| | ३ | मात्रपदव्य | मात्रपदस्य |
| ४७ | ९ | गुणत्बं | गुणत्वं |
| | २३ | इमी | इमौ |
| | | निसेशनीयम | निवेशनीयम |
| ४८ | ६ | चक्षुरिद्रियत्वेन | परमाणुरूपे |
| | ८ | चक्षुरिद्रिक | चक्षुरिद्रिय |
| | २६ | गूणत्वव्याप्या | गुणत्वव्याप्या |
| ४९ | १७ | यत्तछदन्दस्य | तच्छब्दस्य |
| | २६ | पृथिबीनिष्ठ | पृथिवीनिष्ठ |
| ५० | १ | सप्तसंख्या | सप्तत्वसंख्या |
| | ५ | विभाजकधर्मा | विभाजकधर्मान्यतम |
| | | न्यतमवन्न: | वन्त: |
| | १० | आधेयनां | आधेयता |
| ५१ | ५ | स्वनिष्ष | स्वनिष्ठ |
| | २३ | सग्बन्ध: । | सम्बन्ध: । |
| | २४ | जन्यत्वावत् | जन्यतावत् |
| | २२ | विशेष्यमात्रोत्पादाने | विशेष्यमात्रोपादाने |
| ५२ | ३ | कसाय | कषाय |
| | ६ | विभाजकधर्मेषु | विभाजकधर्मान्यतमेषु |
| | १० | संख्याक्यप्तिय | संध्यापर्याप्त्यधिकर |
| | | धिकरणभिन्न | वाभिन्न |
| ५० | १३ | घटितनानिरूपित | घटिततानिरूपित |
| | १४ | गटितानिरूपित | घटिततानिरूपित |
| | २५ | आधेयत्पम | आधेयत्वम |

| पृष्टम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | २६ | षदिवघः इति | षड्विघः इति |
| ५४ | २ | सख्यर्याप्त्य | संख्यापर्याप्त्यघि |
| | | घिकरणानां | करणानां |
| | २ | विभाजकशर्मा | विभाजकघर्मा |
| | २२ | घर्मान्यतमनिष्ठ | घर्मान्यतमनिष्ठ |
| | २३ | अविकरणता | अघिकरणता |
| | २४ | ,, | ,, |
| | २८ | ,, | ,, |
| | २५ | घात्वर्थ | घात्वर्थ |
| ५५ | २ | घाणेंद्रियनिष्ठ | घ्राणेंद्रियनिष्ठ |
| | ३ | गंघ | गंघः । |
| | ४ | ,, | ,, |
| | २२ | ,, | ,, |
| | २६ | गंघस्य | गंघस्य |
| | २० | गंघं | गंघम् |
| | | तयोरमेद | तयोरभेद |
| | | विघाशब्दार्य | विघाशब्दार्थ |
| ५६ | ४ | वर्मान्यतरस्मिन्न | घर्मान्यतरस्मिन्न |
| | | न्वयः | न्वयः |
| | १२ | अन्योयोगोव्यव | अन्योयोगोव्यव |
| | | च्छेंदश्चार्थः । | च्छेदश्चार्थः । |
| | २६ | प्रतियोगिता | प्रतियोगिता |
| | २२ | अघिकरणतायाः | अघिकरणतायाः |
| | | अःधेयत्वे | आधेयत्वे |
| ५७ | १३ | स्पर्शोंऽन्वयः । | स्पर्शोऽन्वयः । |
| | २४ | त्वगींद्रियभिन्नेंद्रिय-जन्यज्ञानविषयत्वे | त्वगींद्रियजन्यज्ञान-विषयत्वे |
| ५९ | ५ | शीतोष्णानुशींतस्पर्श-भेदात् | शीतोष्णानुष्णाशीतस्पर्श-भेदात् । |

| पृष्टम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ५९ | ६ | अनुष्णशीतं | अनुष्णाशीतं |
| | ८ | शीतोष्णानुष्णशीतालां | शीतोष्णानुष्णाशीतानां |
| | ११ | असाधारणशर्मः । | असाधारणधर्मः । |
| | १५ | त्रित्वसंख्य | त्रित्वसंख्या |
| | १७ | त्रित्वसंख्य | त्रित्वसंख्या |
| | २१ | स्पशँः । | स्पर्शः |
| | २४ | पृथिव्यप्तेजीवायवः | पृथिव्यप्तेजोवायवः |
| | २६ | आधेयन्वे | आधेयत्वे |
| | | निन्नपितत्व | निरूपितत्व |
| ६१ | ६ | व्यहारः | व्यवहारः |
| | १५ | अधिकरणता | अधिकरणता |
| | २३ | तच्छक्ष्दार्थ | तच्छब्दार्थ |
| ६३ | ७ | संख्यापर्याप्त्यधिकरण वर्थः | संख्यापर्याप्त्यधिकरण मर्थः |
| | २४ | तया च | तथा च |
| ६४ | ९ | कार्यतानिरूगित | कार्यतानिरूपित |
| | ११ | पृथक्त्वय् | पृथक्त्वम् |
| | २५ | पृक्थत्वे | पृथक्त्वे |
| ६५ | २५ | शब्दद्रयोगनिष्ठ | शब्दप्रयोगनिष्ठ |
| ६६ | २२ | ध्वंसनिष्ठजन्वता | ध्वंसनिष्ठजन्यता |
| ६७ | ८ | ध्वंसं | ध्वंसं |
| | १४ | वियोगः | विभागः |
| ६८ | ८ | इन्याकारक | इत्याकारक |
| | २० | यिषयता | विषयता |
| | २२ | यन्निरूयिता | यन्निरूपिता |
| | २४ | व्यवहारुं | व्यवहारः |
| ६९ | | लक्षणमुच्यसे | लक्षणमुच्यते |
| ७० | २१ | असमवायिकरणं | असमवायिकारणं |

| पृष्टम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | २२ | वत्वं | द्रवत्वं |
| ७१ | ४ | द्रव्यत्वे | द्रवत्वे |
| ७२ | १३ | चूर्ज्ञादिनिष्ठ | चूर्णादिनिष्ठ |
| | ,, | आधेयना | आधेयता |
| | २५ | समन्यय: | समन्वय: |
| ७३ | ३ | अकारणत्त् | अकारणात् |
| | ८ | इनि | इति |
| | ११ | अधिकरणतानिरूपक | अधिकरणतानिरूपित |
| | २१ | अतेन | अनेन |
| ७४ | १५ | पर्यांप्यधिकरण | पर्याप्त्यधिकरण |
| | १६ | आधेयतता | आधेयता |
| | २३ | कार्यताभामन्वय: | कार्यतायामन्वय: |
| ७५ | २ | वृद्धि: | बुद्धि: |
| | ५ | द्वित्शब्दस्य | द्विशब्दस्य |
| ७६ | ५ | ज्ञानभिन्ना | ज्ञानाभिन्ना |
| | १२ | संस्कारजन्यत्पं | संस्कारजन्यत्वं |
| ७७ | १५ | पर्यात्प्याधिणाकरभिन्न | पर्यात्प्यधिकरणाभिन्न |
| ७८ | ७ | स: एत्यत्र | स इत्यत्र |
| | २४ | सवासवाक्यात् | समासवाक्यात् |
| ७९ | १३ | घटत्वं ग्राह्यत्वम् | घटत्वं ग्राह्यम् |
| | १७ | आधेयतानिरूपक | आधेयतानिरूपित |
| | १८ | अनुमवत्वं | अनुभवत्वं |
| ८० | २ | म्रमे | भ्रमे |
| | ७ | वत: | अत: |
| | २२ | शुक्लौ | शुक्तौ |
| | | तस्त्रर्मनिष्ठ | तद्धर्मनिष्ठ |
| ८१ | ९ | नातिघ्याप्ति: | नातिव्याप्ति: |
| ८२ | ७ | अस्यइत्यत्रतच्छब्दस्य | यस्य इत्यत्रयच्छब्दस्य |

| पृष्टम् | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ८५ | १ | यथार्थानुभविभाग | यथानुभवविभाग |
| | २ | प्रत्यक्षानुमितिशाब्द | प्रत्यक्षानुमित्युपमिति शाब्द |
| ८९ | २४ | निमित्तकरणस्य | निमित्तकारणस्य |
| ९० | २२ | इंद्रियार्थबन्निकर्व | इंद्रियार्थसन्निकर्ष: |
| ९० | २६ | तच्जन्यं | तज्जन्यं |
| ९१ | २३ | सन्निकर्प: | सन्निकर्ष |
| ११ | २२ | त्प्रयक्षे | प्रत्यक्षे |
| | | विशेषणविंशेव्य | विशेप्यविशेषण |
| ९३ | ३ | वह्निव्याप्य | वन्हिव्याप्य |
| ९३ | २२ | ज्ञानन्ता | ज्ञानस्या |
| ९३ | २७ | जत्यता | जन्यता |
| ९४ | २२ | पदाधर्मता | पक्षधर्मता |
| ९५ | ४ | (घुम:) | (धूम:) |
| ९५ | ७ | वह्निध्याप्य | वन्हिव्याप्य |
| ९५ | २० | पुर्ववद्बोध्म् | पूर्ववद्बोध्यम् |
| ९६ | २७ | पवैतनिरूपित | पर्वतानिरूपित |
| ९८ | ७ | व्यनिरेकि | व्यतिरेकि |
| ९८ | १८ | व्याप्त्याभावा | व्याप्त्यभावा |
| ९८ | २१ | जन्वय | अन्वय |
| ९८ | १६ | अभिधेयत्याच्च | अभिधेयत्वाच्च |
| १०० | १ | गन्धत्वादित्यत्र | भिद्यतेगन्धवा त्वात् इत्यत्र |
| १०० | २८ | शून्बत्वस्य | शून्यत्वस्य |
| १०२ | ८ | साश्यं | साध्यं |
| १०२ | ६ | सक्षणसंगति: | लक्षणसंगति: |
| १०२ | ६ | सत्प्रपक्ष | सत्प्रतिपक्ष |
| १०२ | २४ | सम्बत्घेन | सम्बन्धेन |
| १०३ | २१ | अधिकरणस्मर्थ: | अधिकरणत्वमर्थ: |
| १०३ | १९ | साध्याभावनिष्ठ | साघ्याभावनिष्ठ |

